# ENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, Ph. D.

*No. 97.*

---

# दैवज्ञकामधेनुः ।

भाग १

अर्थात्

## प्राचीनज्योतिषग्रन्थः ।

ङ्कायाम् हस्तवनगल्यनामके महाविहारेऽध्युषितेन

ोपाध्यायेन श्रीमता अनवमदर्शीसङ्घराजवरेण सङ्कलिता ॥

# DAIWAGNAKÂMADHÊNU,

A Treatise on Astrology

the very Venerable Anavamadarsi Sangharâja

havira of the Hastavanagalya Parivena, Ceylon.

ted by the Very Rev. C. A. Seelakkhandha

avira of the "Sailabimbàràma" Vihàra,

Dodanduwa, Ceylon

...a Upadhyaya, Sanskrit College Benares.

*Fasciculus I.*

Sa 5
A

BENARES.

*...d by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*...cretary, Chowkhamba Sanskrit Book Depot.*

---

Printed at T. P. W. & the Vidyâvilâs Press

Benares.

1905.

72

# सूचीपत्रम्।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( जिल्द -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ६ |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | १ | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | २ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ५ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |

# दैवज्ञकामधेनुः ।

नमः शाक्यसिंहाय ॥

## प्रथमोऽध्यायः

अथ प्रारम्भः

28696

प्रतिफलन्ति जगन्ति समन्ततो-
महति यद्धिषणामणिदर्पणे ।
स भगवान् मुनिरीहितसिद्धये
हृदि चिरं मम गन्धकुटीयताम् ॥ १ ॥
अनुगतजिनशिष्टिर्ब्रह्मवंशैक दृष्टि-
र्मुनिरनवमदर्शी पारदर्शी कलानाम् ।
प्रणयति सकलां सद्[2]ग्रन्थसारार्थदोग्ध्रीं
विबुधजननिषेव्यां दैववित्कामधेनुम् ॥ २ ॥
[1]-धीः पिशाचाश्वपलात्मभाजो-
निन्दन्ति ये तेषु ममास्ति नास्था ।
आराधकोऽहं महतान्तु तेषां
येऽत्रश्रमज्ञाश्च परार्थकामाः ॥ ३ ॥
प्राच्यैर्वराहमिहिरादिभिर[3]भ्यधायि
व्यासेन यच्चरितमम्बरगोचराणाम् ।

---

१ मतिः ॥ २ षद्ग्रन्थ ॥ ३ रभ्ययायि ॥

(प्राचीन ज्योतिष)
लेखक
अनवमदर्शी
(ANAVAMADARSHI)
(C. A. Seela Khanda)
S.L. 1

संहृत्य तव प्रथममत्र विभावयामि
सङ्ख्यानसंस्करणनिर्णययुक्तियुक्तम् ॥ ४ ॥
अब्दं द्विधाकलय्याऽत्रमूर्ध्वस्थं वर्द्धयेत् सुखैः ।
धीरनागैरधोन्यस्तं नदीतीर्थेन भाजयेत् ॥ ५ ॥
लब्धं दिनादिकं मूर्ध्नि दत्वा तत्तत्परादिकम् ।
हित्वा कोमलनामानि मासवाक्यानि पूरयेत् ॥ ६ ॥

विशुद्धनिधिपातः । विमर्द्दनपुरस्त्री । कुशान्धयखरोरुः । वशीतिलकरुद्रः । शिवाब्धिबुधपुत्री । नयाम्बुनीषुयात्रा । नयाम्बुनवपूरः । दिवानवरिपुस्त्री । दशाङ्गनरकारी । प्रवीरगुरुयन्त्रः । विवासनविकारी । मृगाकुलीतपोस्त्री । रवेरजगृहादितः प्रभृति मासवाक्यानि ॥

नाभिना सर्व्वमाहृत्य नीचाप्तमुपरिक्षिपत् ।
लीनेनोर्ध्वस्थमाहृत्य घटिकादिञ्च साधयेत् ॥ ७ ॥
दिनानि दद्याच्छुक्रादीन्याकलोयमहर्गणात् ।
ततो धीदण्डनेयश्रीलब्धं खण्डयुगं भवेत् ॥ ८ ॥
शिष्टमिष्टदिनम्प्रोक्तं युगोदयदिनादिमम् ।
युगोदयदिनेशः स्याद् युगमानेन वा हृते ॥ ९ ॥
गुणकारः फलं नाम भागहारं प्रमाणकम् ।
प्राप्तलाभो भवेदब्दसंस्कारे तु यथाह्वयम् ॥ १० ॥
दिनराशिर्भवेदिच्छा हन्यात्तम्फलराशिना ।
विभाजयेत् प्रमाणेन लाभताराकलादिकम् ॥ ११ ॥
वर्त्तमानयुगाब्दानि भागहारैर्विभाजयेत् ।
लब्धं धनमृणं वा स्याद् ग्रहाणां स्वस्वमध्यमे॥ १२ ॥

---

१. कलय्यात ॥ २ रसो ॥ ३ कुशान्वषखरोरुः ॥ ४ नरा ॥
५ नयाल ॥ ६ नाहिना सर्व्वमाहृत्य ॥ ७ नीवास ॥

चक्रपादञ्च चक्रार्द्धं दध्याश्चन्द्रोच्चपातयोः ।
यथास्वं निक्षिपेत्तत्र ध्रुवाणि च यथाक्रमम् ॥ १३ ॥
चन्द्रात्ततुङ्गभौमज्ञजीवशुक्रार्किराहुषु ।
ध्रुवाणि युगमानेन मक्षुण्णयुगभुक्तयः ॥ १४ ॥
तण्डुललाभी । लीन नेरः स्याद् । भैरवपूजा । कोशलराज्ञः ।
भीरुररन्धः । शौण्डगतीनां । ज्ञानरयाब्दे । कान्तिपताका॥१५
भीरुरनागोरुद्रयमः स्याद् दैवजराजावंशगजानाम् ।
वारिचराब्धिर्भूसुलभोयं चण्डसमाजे भिन्ननतोजिः ।
सत्रुटिकास्ते भूयुग भोगाः † ॥ १६ ॥
भेनाभ्यस्ते स्वदेशक्षितिपरिधिमतो भाजकाकर्णलब्ध-
स्तेन स्वभ्यस्तभुक्तिर्गणितहृदयविद् भाजयित्वा विलिप्ताम् ।
या रेखामेरुलङ्कान्तरमृजुपतिता तत्र पूर्व्वापरार्द्धैः
शोध्यः योज्यं क्रमेण प्रणयति विहिते मध्य मेखे चराणाम् १७
सुमेरु हिमवान् वत्सपुर्य्यवन्ति चकोरकः ।
वायुः खरश्च लङ्केति रेखामध्यगताऽत्रहि ॥ १८ ॥
देशान्तरविधिं हित्वा केचित्बीजक्रियां जगुः ।
कल्याब्दे गात्रतुङ्गोने नानादीपा हृतं तथा ॥ १९ ॥
यथा स्वम्भाजकैः प्राप्तं हन्याद् बीजफलम्भवेत् ।
भवेत् सुधामयूखस्य भाजको मम शाषणम् ॥ २० ॥
अस्य तुङ्गे ध्रुवोच्चाटा क्षमापुत्रस्य सत्कविः ।
बुधशीघ्रे जितामासाः ससुरेड्येननोनटः ॥ २१ ॥
भृगुशीघ्रे धरारूपं शनेः याज्ञाविधुर्ननु ।
तमसो धूर्त्तधूर्पश्चेत्समीभिर्भादिकं हरेत् ॥ २२ ॥

---

१ चन्द्रातन्तुङ्ग ॥ २ नरा ॥ ३ मिछा ॥ ४ चथा ॥ ५ शतायोज्ञा ।
६ श्चेदमीभिः ।

† अस्य तु अन्त्यचरणमुपलब्धेषु सर्व्वपुस्तकेषु ऊनमेव दृश्यते॥

CENTRAL ARCHAEOLOGICAL

यद्वा प्रवर्त्तितं वर्षं स्वस्वबीजेन ताडयेत् ।
विभज्य विम्बयोगेण लब्धा लिप्तादयस्ततः ॥ २३ ॥
शरोभयाय नागानां नागवह्निशिनिर्द्दयम् ।
परेचोल इतिन्वादि क्रमात् स्युर्बीजराशयः ॥ २४ ॥
तदेतद्योजयेद् भौमबुधभास्करसूनुषु ।
शोधयेच्चन्द्रचान्द्राच्च जीवभार्गवराहुषु ॥ २५ ॥
युगाब्दं भास्करादीनां भागहारैर्विभाजयेत् ।
लब्धा लिप्तादयः प्राग्वत् तेषामृणधनक्रिया ॥ २६ ॥
तुलांशकोरतिर्ज्जा यावत्तीसूनुस्समापुरी ।
भूभेकचन्द्र इत्येते भागहारा यथाक्रमम् ॥ २७ ॥
आर्य्यादिसुतभान्तेषु रवेर्बीजं विशोधयेत् ।
इदंवा बीजकर्म्मोक्तं चक्षुस्साम्यप्रतीतये ॥ २८ ॥
ज्ञानतुलां पुरस्कृत्य सूर्य्यादीनां यथाविधि ।
इच्छादि न क्रियां कुर्य्याल्लब्धा भोगविनाडिका ॥ २९ ॥
चतुरो हिममौलिनगः कवयो
मुनिकोटिखरः खगविद् ध्वनिना ।
भयवित्युरगान्तममी क्रमशो
दिनभुक्तिविलिप्तिगणा विहिता ॥ ३० ॥
अभीष्टविघटी हित्वा ज्ञानतुलात् पुरास्थितात् ।
शेषं भागविनाडीभिस्ताडयित्वा यथाविधि ॥ ३१ ॥
अनुज्ञा तत्परैर्भक्ता ततो लब्धकलादिकम् ।
एष्य मध्यमतो जह्याद्युञ्जीतातीतमध्यमैः ॥ ३२ ॥

इतिसामान्यविधिनामप्रथमोध्यायः ।

—○∘○—

---

१ याद्वापवर्ज्जितम् । २ याना । ३ निर्शिर्द्दयम् । ४ वर्ज्जं ।
५ शन्द्र । ६ ब्राण । ७ ज्ञाण ।

# द्वितीयोऽध्यायः ।

——:o:——

अथ वक्ष्यामि संक्षेपाच्चरितं द्वादशात्मनः ।
ज्ञानतुलाफलं तस्य यजासञ्जीवनम्प्रमा ॥ १ ॥
ऋणवर्षे भगादीनां धर्म्मवाक्येन भाजकः ।
रवेर्मध्यममेव स्यान्मध्यमं बुधशुक्रयोः ॥ २ ॥
भौमजीवशनीनां तु शीघ्रोच्चन्तदुदाहृतम् ।
रवेर्मध्यमतो हित्वा लिप्ताद्यं पौर्णमीं ततः ॥ ३ ॥
शेषे गोलपदश्चैव ज्ञात्वा कर्म्म समाचरेत् ।
पूर्व्वार्धमुत्तरं गोलमाचित्रादर्धमादिशेत् ॥ ४ ॥
चित्रान्तार्द्धं मह्वसैव पश्चिमार्धञ्च दक्षिणाम् ।
पादोनास्तारकाःसप्तपाद इत्यत्र निश्चितः ॥ ५ ॥
सपादं तारकाद्वन्द्वं राशिरित्यभिधीयते ।
नागालयाख्यं यद्यस्ति मण्डलार्द्धं तमुद्धरेत् ॥ ६ ॥
शुभार्च्चनाख्यपादो वा तमप्यस्माद्विशोधयेत् ।
पादास्थितञ्च विज्ञेयं समश्चेद्विषमात् पदात् ॥ ७ ॥
तं विशोध्य स्थिताञ् शेषान् द्विगुणीकृत्य कोविदः ।
सपादताराद्वन्द्वस्य गुणमेकं समुद्धरेत् ॥ ८ ॥
ततसङ्ख्याया गुणान्मूर्ध्नि पूरयेद्विकलामयान् ।
शेषे चान्त्यगुणाभ्यस्ते माङ्गल्येन हृतं क्षिपेत् ॥ ९ ॥
तदेतद्विकालापिण्डं पूर्व्वार्द्धे तस्य मध्यमात् ।
शोधयेदपरार्धे तु योजयेत् स रविस्फुटः ॥ १० ॥
दीर्घिका धूलिका कारिका वर्धनी
वाणिनी लेखिनी षड्गुणा भास्वता ।

---

१ त्राण । २ साणायवर्षेभार्दीनाम् । ३ वाक्याय । ४ निश्वगः ।
५ ताविदेः ।

अष्टनुद् धाननुद् दाननुद् बीननुद्
भिन्ननुद् किन्नुना तत्फला तिक्रमात् ॥ ११ ॥
चातुरीशचतुर्भुक्तिस्तत्रान्तज्याफलं न्यसेत् ।
मध्ययोः पादयोर्जह्यादन्ययोः स स्फुटो भवेत् ॥ १२ ॥
स्फुटन्तु विकलीकृत्य ज्ञानपादेन भाजयेत् ।
लब्धंराशिर्भवेच्छिष्टमतीतमिति निर्दिशेत् ॥ १३ ॥
अतीतश्चेदतस्त्यक्त्वा शेषं विद्यादनागतम् ।
उभयं स्फुटभोगेन भाजयित्वा ततो हृतम् ॥ १४ ॥
अतीतमनतीतञ्च दिवसादि विनिर्दिशेत् ।
ज्ञानपादावशिष्टं यत्प्रागतीतमुदाहृतम् ॥ १५ ॥
तच्चेदल्पतरं भुक्ते सङ्क्रमःस्यात्तदानतैः ।
हृत्वा भोगहृतं नीतिशुद्धसङ्क्रमनाड़िका ॥ १६ ॥
अस्ति लङ्केतिविख्याता राजधानी सुरद्विषाम् ।
भर्त्तुःसामध्यरेखाया स्थलस्य च जलस्यच ॥ १७ ॥
सैव सीमा भवेत्भानोर्दक्षिणोत्तरगोलयोः ।
न तत्राविषुवन्मध्यश्छाया स्याद् गोलयोन्तरः ॥ १८ ॥
योजने नोनषष्ठ्यंशे नैकव्यङ्गुलमेधते ।
विषुवद्व्यङ्गुलं नाम तदेतत्परिकीर्त्तितम् ॥ १९ ॥
आश्विनीतारकाङ्गच्छेदुत्तरस्यां दिवाकरः ।
दक्षिणस्यान्तु सङ्क्रान्तमन्तरालं दिवांशकम् ॥ २० ॥
विसुवन्मण्डलादूर्ध्वमधस्ताद्याम्यसौम्ययोः ।
चतुर्विंशतिभागान्ते [1]प्रवृत्तमपमण्डलम् ॥ २१ ॥
[2]ताराग्रहेन्दुपातार्क्का भ्रमन्त्यस्मिंस्तमन्तरम् ।
क्षितिच्छाया च तत्रैवं मण्डलार्धे विवस्वतः ॥ २२ ॥

---

१ प्राण ॥ २ ताराग्रहेन्दुसुपातार्क्क ॥

चत्वारिंशत्कलायुक्तं भागद्वितयमङ्गुलम् ।
विद्यादानेन मानेन मध्यमष्टादशाङ्गुलम् ॥ २३ ॥
पार्श्वयोर्मध्यसूत्रस्य सन्धिमार्गस्त्रयन्त्रयम् ।
प्रत्येकं त्र्यङ्गुलस्थे च खण्डमेकं नवाङ्गुलम् ॥ २४ ॥
मेषादित्रितये संज्ञा मध्यसूत्रादुदीक्रषु ।
मीनादित्रितयनामानि विलोमाद्याम्यतस्त्रिषु ॥ २५ ॥
कोणतो विनिवृत्तिःस्यादयनं नाम भास्वतः ।
लङ्घनं[1] मध्यसूत्रस्य गोलोच्चलनमुच्यते ॥ २६ ॥
विधाय पद्मिनीबन्धोः स्फुटं विघटिकामयम् ।
भाजयेत् ज्ञानगम्भीरैर्यदि[2]नैकोपि लभ्यते ॥ २७ ॥
उत्तरायनगोमध्यसूत्रादन्तम् प्रवर्त्तते ।
यद्येको लभ्यते भानुस्तदा याम्यायनोन्मुखः ॥ २८ ॥
द्वितयं यदि लभ्येत शेषस्तत्र च नास्ति चेत् ।
मध्यसूत्रे स्थितः शेषे विद्यतेऽब्दे बहिर्गतम् ॥ २९ ॥
त्रितयं यदिलभ्येत तदायाम्याय नोन्मुखम् ।
यदि चत्वारि लभ्यन्ते मध्यसूत्रे पुनःस्थितम् ॥ ३० ॥
चतुर्विकल्पे शून्ये[3] द्वे क्रमाच्छेषं विवर्धयेत् ।
विधिना बन्धुना नालैर्बीजैस्तेनैव भाजयेत् ॥ ३१ ॥
लब्धं दिनादिकं भानोस्तत्तत्सूत्रादपेयुषः ।
पूर्व्वोक्तानेव तान् शेषान्नानासूत्रैर्विभाजयेत् ॥ ३२ ॥
सम्प्राप्तमगुङ्गुलं भानोस्तत्तत्सूत्रादपेयुषः ।
स्वदेशोदयरेखान्तु ज्ञातुकामो विचक्षणः ॥ ३३ ॥
विषुवद्व्यगुङ्गुलं भक्त्वा शम्भुना लब्धमङ्गुलम् ।
स्वदेशरेखाभू[4]मध्ये रेखयोरन्तरम्भवेत् ॥ ३४ ॥

---

१ लघनम् ॥ २ पर्य्यादि ॥ ३ शून्यद्वये ॥ ४ मध्यरेखयोरन्तरम् ॥

स्वदेशोदयरेखायामुदयसंशुमालिनि ।
मध्यच्छाया[1]च न भवेद् दृष्टिच्छाया च संम्भवेत् ॥ ३५ ॥
विषुवद्धयङ्गुलं[2] ज्ञानसूत्राभ्यस्तम्भवेत्त्रिधा ।
काश्चनैर्विंशदैश्चाथ[3] कन्दर्पैश्च विभाजयेत् ॥ ३६ ॥
लब्धं चरार्धवाक्यानि मेषादीनां क्रमोत्क्रमात् ।
लङ्कार्कोदयवाक्येषु तेषामृणधनक्रिया ॥ ३७ ॥
अमासशाषणं मांससूनुजिच्छाषणार्थदम् ।
लङ्कार्कोदयवाक्यानि मेषादीनां क्रमोत्क्रमात् ॥ ३८ ॥
क्रमोत्क्रमेण संस्थाप्य वाक्यान्येतानि कोविदः ।
ततश्चरार्द्धवाक्यानि शोधयेत् प्रथमत्रये ॥ ३९ ॥
पश्चिमत्रितये तानि व्युत्क्रमेण च योजयेत् ।
नाम्ना संस्कृत वाक्यानि तानि विद्याद्विचक्षणः ॥४०॥
मेषादिषट्के क्रमशो व्युत्क्रमेण तुलादिषु ।
असुरैस्तानि विभजे ल्लब्धा लग्नविनाडिका ॥ ४१ ॥
ततो धनेन लब्धास्तु मेषाद्यंशकभुक्तयः ।
मध्याह्नार्कस्फुटं[4] ज्ञात्वा गोलं कुर्य्यात्पदक्रियाम् ॥ ४२ ॥
सपादताराद्वन्द्वस्य वाक्यमेकं समुद्धरेत् ।
चरार्धवाक्येनैतेषां सङ्ख्यया मूर्ध्नि पूरयेत् ॥ ४३ ॥
शेषन्तु विकलीकृत्य परवाक्येन वर्द्धयेत् ।
विभज्य ज्ञानपादेन लब्धं चोपरि निक्षिपेत् ॥ ४४ ॥
नानानागवरेतश्च याम्यदक्षिणगोलयोः ।
योजयेच्छोधयेच्चाथ यथाविधि विचक्षणः ॥ ४५ ॥
ततो ज्ञानमतापासं दिनार्धघटिकादिकम् ।
तच्चनागात् समुद्धृत्य निशार्धं स्थितमिष्यते ॥ ४६ ॥

---

१ शंकचे ॥ २ आण ॥ ३ घंषने ॥ ४ मध्यान्भार्कस्फुटम् ।

मध्यार्कस्योजपादन्तु विलिप्तीकृत्य कोविदः ।
दिनार्धविकलाप्राप्तं घटिकादि विनिर्द्दिशेत् ॥ ४६ ॥
नवेनाभ्यस्य तत्सर्व्वं नीचाप्तमुपरि क्षिपेत् ।
लीनोनोर्ध्व[1]स्थमाहृत्य लब्धव्यङ्गुलमिष्यते ॥ ४७ ॥
विसुवद्व्यङ्गुलेनाथ दक्षिणोत्तरगोलयोः ।
योज्यं शोध्यन्न चेच्छोध्यं व्यक्तये न विशोधयेत् ॥४८॥
मध्यं च्छायामिमां विद्यादुदयार्कस्फुटं पुनः ।
विलिप्तीकृत्य तत्रापि[2] ज्ञानपादहृतं वृथा ॥ ४९ ॥
शेषन्तु तत्र सन्ताड्य निजोदयविलिप्तिभिः ।
ज्ञा[3]नपादैः समाहृत्य [4]लब्धभुक्तिर्विनाडिका ॥५०॥
विशोध्य स्वोदये शेषमभुक्तं विकलां वदेत् ।
क्षि[5]प्तलग्नान्तरं तस्य मिष्टकालञ्च साधयेत् ॥ ५१ ॥
अर्कभुक्तिहतायातलग्नसंख्या भवेत् ततः ।
वीराङ्गेण विभज्याप्ता विलिप्ताश्च विशोधयेत् ॥ ५२ ॥
पूर्व्वापराह्णयोर्य्यातगन्तव्यविकलांगणे ।
दिनार्धविकलांशुद्ध्यशेषं सप्तपदस्य चेत् ॥ ५३ ॥
भाग्येन वर्द्धयेद् गोपैः षडर्द्धचरणस्य चेत् ।
[6]षट्पदस्यान्तराज्येन वर्धयित्वा स्थितं पुनः ॥ ५४ ॥
क्रमेण यातयातव्यविकलाभिर्विभाजयेत् ।
अङ्गुलादि ततो लब्धं मध्यच्छायामिह क्षिपेत् ॥ ५५ ॥
अर्द्धीकृतं तदेकश्च तस्य तस्य पदम्भवेत् ।
पदं रत्नहतं तत् तद् गुणाकारेण संयुतम् ॥ ५६ ॥
पूर्व्वापराह्णयोर्मध्यच्छायाविरहितं ततः ।
नीचेन वर्धयेदेष भागहारो भविष्यति ॥ ५७ ॥

---

१ ध्व । २ स्वा । ३ ज्ञाण । ४ लब्धं । ५ त्क्षिप्ता लग्नान्तरन्तस्य ।
६ षट्पदस्यन्तु ।

तत्तद्गुणीकृताभ्यस्यदिनार्द्धविकलागणम् ।
भाजकेन हृतायातयातव्यघटिकादयः ॥ ५८ ॥
स्थापयेद् दृष्टविकलां युक्तां भुक्तिविलिप्तिभिः ।
ततोऽर्कराशेरारभ्य लग्नभुक्तिर्विशोधयेत् ॥ ५९ ॥
अशोध्यशेषमास्थाप्य भानुनाऽतीतराशिषु ।
सङ्ख्याशोधितलग्नानां दत्वा तन्मूर्ध्नि निक्षिपेत् ॥ ६० ॥
व्यङ्गुलेरुभयं राशिमभ्यसेत्तदधःस्थितात् ।
तदानीं लग्नभोगाप्तं लिप्तादुपरि निक्षिपेत्॥ ६१ ॥
ततश्चनूतनैः प्राप्तं नक्षत्रमिति निर्दिशेत् ।
भक्तेष्टविघटीमर्के भुक्त्या ज्ञानोन्नतांकुरैः ॥ ६२ ॥
भाजितानि कलादीनि क्षिप्त्वा लग्नस्फुटं वदेत् ।
लग्नस्फुटं कलीकृत्य व्यङ्गुलेन विभाजयेत् ॥ ६३ ॥
लब्धं राशिरितिज्ञेयं शेषं कृत्वा च पञ्चधा ।
रत्नलग्नधनप्रायं नागैराहत्य च क्रमात् ॥ ६४ ॥
व्यङ्गुलेन विभज्याप्तास्ततो होरादयः स्मृताः ।
एवं राशिश्च होराश्च द्रेष्काणाश्च नवांशकाः ॥
द्वादशत्रिंशभागाश्च षड्वर्गइति कीर्त्तिताः ॥ ६५ ॥
यथाषण्णां हि वर्गाणां विधिं लग्नस्फुटे कृतः ।
तथा शेषां ग्रहाणाञ्च स्फुटे षड्वर्ग इष्यते ॥ ६६ ॥

वेदार्क बिम्बा दिवसे नियोज्य
व्यतीतखण्डा हृतधावकाञ्च ।
विभज्य निम्नेन फलं द्विधातः
भियाहृतञ्चोपरि संस्थितञ्च ॥ ६७ ॥

---

१ भुक्त्या ज्ञाणोन्नतां । २ मांगुल्येन । ३ पञ्चधा । ४ व्यंगुलेन ।
५ देर्का नम्ब । ६ मिच्छा ।

क्ष्मेन रत्नेन च संगुणय्य
सेनावाशिष्टैरुभयत्र विद्यात् ।
बुधादिकं शीतकरादिकञ्च
वर्षेश्वरं मासयुगं क्रमेण ॥ ६८ ॥

स्रवन्ति सरितः स्वल्पजीमूतानातिवारिदाः ।
पृथवी सस्यविरला व्यालदंष्ट्रिसमाकुला ॥ ६९ ॥
पित्तं कुप्यति सीदन्ति तापसाः सहगोकुलैः ।
नभोमलिनवद् दृश्यं तीव्रं तपति भास्करः ॥ ७० ॥
नृपाः युधिबलैराढ्याः देशान् घ्नन्ति परस्परम् ।
संवत्सरे च मासे च वारे च द्वादशात्मनः ॥ ७१ ॥

इति संवत्सरफलम् ॥

---

दक्षिणायनमुशन्ति भास्वतः कर्कटादिमकरादि वा परम् ।
उक्तकालसममेव वा परं तन्निवृत्तिरणघान्यथा यथा॥१॥
कलहाय भवेद् भानू रजतादर्शवन्मधौ ।
भयाय घर्मे रक्ताभः श्वेतो वर्षस्य वृष्टिकृत् ॥ २ ॥
धूसरः शरादि क्रूरो हेमन्ते कर्णिकारवत् ।
रोगकृच्छिशिरे पिङ्गश्चोरशत्रुभयावहः ॥ ३ ॥
शिरीषपुष्पवत् सद्यो वृष्टिकाले सुवृष्टिकृत् ।
धत्ते चन्द्रकपिच्छाभो द्वादशाब्दमवग्रहम् ॥ ४ ॥
श्यामः कीटभयं भष्मसादृक् परबलागमम् ।
शशिवत् सकलक्षोभं विदधाति दिवाकरः ॥ ५ ॥
उल्कया यदि च विद्युदादिना तिग्मरश्मिरुदयाचलस्थितः ।

---

१ शेना । २ वासविभुम् । ३ वृष्टिकालेषु च ।

हन्यते यदि तदा महीभुजो मृत्युरन्यनृपतेरिहोदयः ॥ ६ ॥
परिधिमान् प्रतिवासरमुष्णगुर्य्यदि चिरादतिराजति सन्ध्ययोः ।
प्रहरणाकृतिकीलकमूर्त्तिमानपि करोति रविर्नृपतिं नवम् ॥ ७ ॥
[1]उद्गतः प्रतिरविरुष्णरोचिशो जलाय वाताय च दक्षिणोदितः ।
द्विपार्श्वगः सलिलभयाय भूभुजां वधाय तस्योर्ध्वमधोऽपि वा स्थितः ८

उल्काऽतिवृष्टिपरिवेषणतामसा दीं
[2]दर्शे रवौ हिमकरेऽपि च पौर्णमास्याम् ।
पापेक्षितानिकुशताञ्चतयोर्विघाता
[3]यार्घस्य सस्य विपरीतमतः समृद्ध्यै ॥ ९ ॥

अर्केन्दुमण्डलोत्भूतो दोषो देशस्य यस्य हि ।
[4]प्राग्गोचरमुपायाति स तत्रापि विपच्यते ॥ १० ॥

ब्राह्मीका मगधाः शकाश्च शबराः काम्बोजवङ्गाङ्गजाः ।
पम्पोदुम्बरयाम्ययामुनभुवः प्राङ्नर्मदातीरजाः ।
विन्ध्यश्रीगिरिवर्धमानगिरयः पूर्वो महेन्द्राचलः ।
[5]शुक्लाः पित्तशरीरिणश्च कटुकाद्रव्याणि वर्गे रवौ ॥११॥

भास्वतश्चरितं तस्य वर्गे तत्तारकाश्रिते ।
विसंयोज्य च पक्षेण शरदावा विपच्यते ॥ १२ ॥

विमलवपुरवक्रमन्डलः स्फुटविपुलामलदीर्घदीधितिः ।
अविकृततनुवर्णचिह्नभृज्जगति करोति शिवं दिवाकरः १३

इत्यादित्यचरितं नाम द्वितीयोध्यायः ।

---

## तृतीयोध्यायः ।

अथेन्दोश्चरितं साधु विवृणोमि समासतः ।

---

१ उद्गतः २ दर्शे । ३ माध्यस्य । ४ दग्गोचार । ५ शुक्लांम्पित्त-शरीरिणश्च । ६ श्रीयो ।

ज्ञानदीपपलं तस्य सिंहहोरांशकप्रमा ॥ १ ॥
लब्धमृक्षादिकं तादृग् दिनतः शोधयेच्च तम् ।
धनाय लिप्तिकादीनां नन्दशाखीविभाजकः ॥ २ ॥
तदंशः फलमिन्दुश्चेत् प्रमाणं कालमौलिनाम् ।
वत्सरे धनलिप्तानां वर्गधर्मो विभाजकः ॥ ३ ॥
चन्द्रमध्यमतो हित्वा चन्द्रोच्चं गोलपादवित् ।
विदध्याद्रविवच्छेषं चन्द्रज्याभिर्भुजाफलम् ॥ ४ ॥
कमलावरगाविदुरीश्चकुरो मलया शिवनुत् शशिनः स्वगुणाः
जिनगो विदुरो धिवरो नलिकाधिपटुर्नवकश्चपलानिनतः॥५
इन्दोर्भुक्तिदशाशालि स्फुटं कृत्वार्कभोगवत् ।
गसन्तरं स्याद्विवरं चन्द्रार्कस्फुटभोगयोः ॥ ६ ॥
चन्द्रार्कदृष्टिनक्षत्रे विलिप्तीकृत्य लिप्तिकाम् ।
पुनर्नीचेन चाभ्यस्य शुद्धभुक्त्या विभाजयेत् ॥ ७ ॥
लब्धं नीति विशुद्धं तत् दृष्टनक्षत्र नाडिका ।
दस्रौ यमोऽनलो धाता शशिरुद्रौ दितिर्गुरुः ॥ ८ ॥
सर्पश्च पितरश्चाथ भगश्चैवार्यमारविः ।
त्वंष्टमारुत ईन्द्राग्निमित्रेन्द्राः निर्ऋतिर्जलम् ॥ ९ ॥
विश्वदेवः हृषीकेशो वसवः सलिलाधिपः ।
अजैकपादहिर्बुध्नः पूषा च दिनदेवता ॥ १० ॥
शिखिगुणरसेन्द्रियानलशिखिविषयगुणर्तुपर्श्च वसुपक्षाः ।
विषयैकचन्द्रभूतार्णवाग्निरुद्राश्विवसुदहनाः ॥ ११ ॥
भूतशतपक्षवसवो द्वात्रिंशश्चेति तारका मानम् ।
क्रमशोऽश्विन्यादीनां वराहमिहिरेण निर्दिष्टम् ॥ १२ ॥

---

१ ज्ञाण । २ माह्यस्य । ३ इन्द्राग्निमित्रेन्द्रो निरतिज्वलम् ।
४ वसुः । ५ विशयेक ।

मासादिवासरान्तः कालस्ताराप्रमाणेन ।
तत्तन्नक्षत्रसंज्ञाः ज्वरादिपीडासु विज्ञेयाः ॥ १३ ॥
इन्द्रानिलादि[1]सब्रह्मसौम्ये शाकी हि वारुणः ।
चित्राश्वयाम्यगोलाः स्युः शेषाश्चोत्तरगोलकाः ॥ १४ ॥

वर्गोऽश्विनोविषतरुर्भिषजस्तुरङ्गाः
तत्पोषकास्तदधिरोहजनाश्चमूपाः ।
युक्ताः जनाश्च तुरगक्रयविक्रयेषु
सैन्यानि मालवकिरात [2]पुलिन्दचीनाः ॥ १५ ॥

वर्गो यमस्य कनकक्षितिमुञ्जवैरी
गान्धर्ववरिवसनास्त्रिदशस्वदेशाः ।
क्रव्यादनाश्व तरुरामलकश्च फल्गु
वस्तूनिबन्धवधताडणलालसाश्च ॥ १६ ॥

वर्गोऽग्निभस्य तु मरुद्भवसालगोषा
कर्णाटयामुनभुवश्च सरस्वतीजाः ।
अब्दज्ञमन्त्रिजननापितकुम्भकाराः
विप्राश्च वह्निशरणास्त[3]रुरुप्रषूणाः ॥ १७ ॥

[4]वर्गः प्रजेशनियतः खलु शूरसेनाः ।
पञ्चालमाधुरकानिर्व्वसनाश्च गौडाः ।
गोजातवारिचरकर्षक[5]रैन्यवस्तु
जम्बुद्रमाश्च धनिनः शकटाधिकाराः ॥ १८ ॥

वर्गो भवेन्मृगशिरोनियतो गजाश्व
साङ्कृतकापिलकुरुक्षितिपारियात्रा ।
शानोद्यताः सुरभिपुष्पफलांशुकानि
रत्नानि व्रीश्चकहराः खदिर[6]माश्च ॥ १९ ॥

---

१ ष । २ कुलिन्द । ३ तरुरहसुनः । ४ वर्ग ।
५ रण्यवस्तु । ६ पञ्चक=पावक ।

वर्गस्तु रौद्रनियतो वृषभध्वजाब्ज–
श्रीमाल्यवद्गिरिजसुम्भकशूर्पकर्णः ।
मन्त्राभिचारनिपुणः परदारसक्ताः
पैशून्यशाठ्यनिरतः विटपीचकृष्णाः ॥ २० ॥
वर्गोदितेश्च[1] पुरुषादपयः पयोधि
प्राग्ज्योतिषाश्चमगधाः मिथिलाभुवश्च ।
सत्यादिभद्र[2]गुणरूपयशः कुलाढ्याः
सेवारताश्च वणिजोजटिनश्च वंशा ॥ २१ ॥
पुष्यस्य वर्गउदयाचलकाशिचोला
श्रीतामलिप्तपुरकोशलवर्धमानाः ।
गोधूमशालियवधान्यरसेक्षुचाटी–
नीरोपजीविसच्चिवाश्च गजाशनाश्च ॥ २२ ॥
वर्गो भवेत् भुजगशस्य कलिङ्गबङ्ग
वैदर्भवत्सविषया प्रवरोर्ध्वकर्णाः ।
कीटाः विषा[3]ः विषधराः परवस्तुकामाः
नन्दाश्च नाग विटपी तृणधान्यकश्च ॥ २३ ॥
वर्गो मसासुनियतो वृषनारिकेल–
विन्ध्याः सचर्म्मवसनास्त्रिपुराश्चपाण्ड्वः ।
कोष्ठालयः सवणिजः पितृभक्तशूराः
स्त्रीवेषिणो बटतरुर्गिरिनिश्रयाश्च[4] ॥ २४ ॥
वर्गो भगस्य शबराश्रय राजधानी
ये वालिराज्यसहनार्हदशार्णदेशाः ।
कार्प्पासयाज्ञिकतिलालवनम्पलास[5]—

---

१ वर्गोदितेस्च । २ भुद्र । ३ विशः । ४ गिरिनिश्रियश्च ।
५ पलासो ।

रूपोन्नताः युवतयश्च कुशीलवाश्च ॥ २५ ॥

वर्गस्तूत्तरफाल्गुणो नियमितो लङ्कापुरी कोङ्कणः
स्वर्णानाम नदी महेन्द्रमलयः शैलोच्चयो दर्दुरः ।
ग्रामादासपुराश्च केरलभुवो ये कर्णतालाकटाः
प्लाक्षादुर्ध्वनिनश्च सौम्य नियमाः पाषाण्डशास्त्राश्रया :२६

हस्तर्क्षस्य हि चित्रकूटशिखरी कर्णाटराष्ट्रम्महा-
राष्ट्रं कोलगिरिश्च चोलविषया नेलूरसूर्य्यादयः ।
क्रौञ्चद्वीपमधस्य शृङ्गशिखरी वैदूर्य्यमुक्ताकरा
स्वाम्बष्टो गजवाहनाश्च रजकाः फल्गूनि धान्यानि च २७

चित्रायाम्बलदेव पत्तनभुवः कच्चोलकाः सिंहलाः
वेदण्डाटविचीयपत्तनजनाः येताम्रवर्णाश्रयाः ।
भद्राख्याश्च किलासनागजदरी ग्रामाश्चबिल्वद्रुमाः
रत्नालङ्कृतिरागलेख्यगणितंख्याताश्च सौगन्धिकाः २८

स्वातेस्तु वर्गः खलु पल्लवाख्याः
काम्बोजसौवीरवधूमुखाश्च ।
तुरङ्गसारङ्गविहङ्गमाश्च
निःसत्वसत्वास्तरुरर्ज्जुनश्च ॥ २९ ॥

वर्गो विशाखासु किरातशूद्र
पाषाण्डदेशायवनाश्च मेनाः ।
वैकङ्कतद्रुश्चनमाष मुद्गा
भक्तो महेन्द्रो नलदैवयोश्च ॥ ३० ॥

वर्गोनुराधानियतः सुराष्ट्र
हेमाद्रिकालामलरैवताश्च ।
सन्तः शरत्सस्य सुदारशूर-

भावा गणे शावकुलम्माश्च ॥ ३१ ॥
शक्रस्य[1] वर्गो मघवान् पराद्री
पुराणभूमिर्भयराजिदेशः ।
कीर्सेर्थवंशभकटापरश्च
सक्ताबलेशा अपि दृष्टिद्दक्षः ॥ ३२ ॥
मूलस्य वर्गस्तापी च शैवालापवनाश्रयाः ।
[2]सद्योमूलफलपत्रबीजान्नैरुपजीविनः ॥ ३३ ॥
आपस्य वर्गो म्लेच्छाश्च वैश्याश्च कनकाकराः ।
वञ्जुलो जलजानाञ्च जलयात्रोपजीविनः ॥ ३४ ॥
उत्तराषाढवर्गस्तु मद्रतालहलाश्मकाः ।
महामात्राश्च मल्लाश्च धनिनः पनसद्रुमाः ॥ ३५ ॥
वर्गे [3]श्रवणनक्षत्रे कूटतालहठास्तथा ।
मायाविनोऽर्क्कवृक्षाश्च ये च भाववतात्मनाः ॥ ३६ ॥
वर्गे धनिष्ठानक्षत्रे स्त्रीराजा वैकलोचनः ।
दीर्घग्रीवास्य केशाश्च शमीबन्धुधनात्मनाः ॥ ३७ ॥
वर्गो भवेद्वारुणभे हिमाद्रि-
कैलाशकैकेयनृपाश्रयाश्च ।
तोयोद्भवाः शौण्डिकनेजकाश्च
कैवर्त्तकाः पाशभृताः कदम्बाः ॥ ३८ ॥
वर्गोऽजपादे तुरगाननाश्च
दासेरकास्तक्षशिलाभुवश्च ।
गोपालचोरव्रतधर्म्महीनाः
शुद्धोर्द्ध ताश्चूतनरुश्च हिंसाः ॥ ३९ ।
उपान्त्यभे वर्गमुदाहरन्ति

१ शक्रश्च । २ सज्यो मूलम्फलम्पत्र । ३ कुलुतालहडास्तथा ।

गन्धारिकान् पिङ्गलसिन्धुदेशान् ।
विप्रांस्तपोदान युतान्धनाढ्यान्
निम्बद्रुमान्धूर्त्तजनान् नृपांश्च ॥ ४० ॥
पौष्णस्य वर्गः पशुपालकीर
काश्मीरनागा वटकङ्कताश्च ।
वस्तूनि तोयाशयसम्भवानि
फलानि बीजानि मधूकवृक्षाः ॥ ४१ ॥
पूर्व्वत्रयं सानलमग्रजानां
राज्ञञ्च पुष्येण सहोत्तराणि ।
सपौष्णमित्रं पितृ दैवतञ्च
प्रजापतेर्भञ्च कृशी वलानाम् ॥ ४२ ॥
आदित्य हस्ताभिजिदश्विभानि
वाणिज्यकानां[1] प्रवदन्ति तज्ज्ञाः ।
मूलत्रिनेत्रानिलवारुणानि
भान्युग्रजातेः प्रभविष्णुवृत्तेः ॥ ४३ ॥
सोमेन्दुचित्रावसुदैवतानि
सेवाजनाः साम्यमुपागतानाम् ।
सार्पाविशाखाश्रवणम्भरण्या-
श्चण्डालजातेरपि निर्दिशन्ति ॥ ४४ ॥
यद्भिन्नक्षितिजेन वक्रगतिना तेनैव यद्दूषितं
यन्मन्दास्पदमुल्कया च निहतं यत् स्योपरागञ्च यत् ।
यप्रोत्क्रुष्टसुधाकरेण मलिनं यत् स्या कृती व्यक्तया
तत्तत्पीडति यत्स्ववर्गमितरं नक्षत्र मारक्षति ॥ ४५ ॥
वर्षस्यात्मा नलादिद्धितयमिह तथा ऽऽषाढयुग्मञ्च नाभिः
[2]सर्पाञ्चेत्तत्प्रषूणं पितृभमविहतैरेभिरिष्टं विशुद्धैः ।

---

१ वणिग्जनानाम् । २ सर्पाश्चैतप्रसूनम् ।

क्रूराक्रान्ते शरीरे मरुदनलभयक्षुद्रवञ्चाथ नाभौ
सस्यध्वंसश्चाविते फलदलसुमनोमूलहानिश्च पुष्पे ॥४६॥
इति नक्षत्रवर्गनिर्णयः ।

———o———

भानुनेन्दुं कलीकृत्य प्रतिलब्धा तिथिर्भवेत् ।
शेषन्तु विकलीकृत्य पुनर्नीचेन ताडयेत् ॥ १ ॥
विवरेण विभज्याप्तमदृष्टतिथिनाडिका ।
अग्निर्दश्रावमावश्यो नागस्कन्दो दिवाकरः ॥ २ ॥
मातृदुर्गादिशोर्थेशः[1] कृष्णो वैवस्वतः शिवः ।
पञ्चदश्यो शशाङ्कश्च पितरस्तिथिदेवताः ॥ ३ ॥
नन्दा भद्रा जया रिक्तापूर्णा चेति क्रमादिमाः ।
पक्षयोरुभयोरेव तिथयः स्युः पुनःपुनः ॥ ४ ॥
इति तिथिनिर्णयः ।

———ooo———

चन्द्रमर्केन संस्कृत्य दृष्टो योग उदाहृतः ।
विधाय पूर्व्ववच्छेषं योगे भोगहृताः कलाः ॥ १ ॥
विष्कुम्भः प्रीतिरायुष्मान् सौभाग्यं शोभनस्तथा ।
अतिगण्डः सुकर्म्मा च धृतिशूलं तथैवच ॥ २ ॥
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणं तथा ।
वज्रं सिद्धिर्व्यतिपातो वरीयान् परिघः शिवः ॥ ३ ॥
सिद्धः साध्यः शुभः शुभ्रो ब्राह्मो माहेन्द्रवैधृती ।
स्वनामतुल्याः देवाख्याः योगाः स्युः सप्तविंशतिः ॥ ४ ॥
इति योगनिर्णयः ।

———o———

१ दिशोत्थेशः ।

तिथेः खेंनात्त्यजेदेकं शुक्ले कृष्णे तु योजयेत् ।
विभज्य सूनुना शेषं जानीयात् करणं चरम्[2] ॥ १ ॥
ववञ्च बालवञ्चैव कौलवन्तैतिलं तथा ।
गरजो वणिजो विष्टिश्चरतः करणसप्तकम् ॥ २ ॥
कृष्णपक्षे चतुर्दश्यामारभ्याचरमं दलम् ।
शुक्ले प्रतिपदः[3] पूर्व्वदलो यावद्यथाक्रमम् ॥ ३ ॥
शकुनिश्च चतुष्पादो नागः किंस्तुघ्न इत्यपि ।
एवमर्द्धानि चत्वारि ध्रुवाणि करणानि च ॥ ४ ॥

इति करणनिर्णयः ।

———oo———

भानुः कलिदिने क्षिप्ता खेंनाहत्य[4] लुनाहृतम् ।
अभीष्टतिथिसङ्ख्याः स्युः दत्वा तानवशेषितैः ॥ १ ॥
लक्ष्मी कलिश्च नन्दा च कालकर्णिजयाविधिः ।
धनुर्नमितिविज्ञेयं वाराणामिह सप्तकम् ॥ २ ॥
हरो दुर्गा गुहो विष्णु ब्रह्मा लक्ष्मीर्धनेश्वरः ।
एते सूर्य्यादिवारेनाः सर्व्वे स्वाख्याः क्रियाशुभाः ॥३॥

इति वारदेवताः ।

—०*०—

एवमृक्षं तिथिर्य्योगः करणश्च चराचरम् ।
वारश्चेति विजानीयात् पञ्चाङ्गं दैवचिन्तकः ॥ १ ॥

इति पञ्चाङ्गनिर्णयः ।

———:*:———

---

१ खण्डा । २ चरम् । ३ प्रतिपदः । ४ बेनाहत्य ।

इन्दुरस्तमितः प्राच्याम्प्रतीच्यामुदयं व्रजेत् ।
विशोध्य चन्द्रतः सूर्य्यं शेषं कुर्य्याद्विलिप्तिकाम् ॥ १ ॥
नीवाराम्बुनि वाक्यस्य सा चेदूना भविष्यति ।
शशाङ्कं नोदितं विद्यात् तनुनायदि सा भवेत् ॥ २ ॥
तामर्कोदयराशेस्तु यो राशिः सप्तमो भवेत् ।
तस्य संस्कृतवाक्येन ताडयित्वा तथा पुनः ॥ ३ ॥
अनूनपादैर्विभजेत् ततो लब्धविनाडिकाः ।
समाश्वेत् पूर्व्ववाक्येन तदा दृग्गोचरः शशी ॥ ४ ॥

इत्यस्तोदयनिर्णयः ।

---

अस्तार्को नेन्दुतः पूर्व्वमस्ति चेत् तत्परित्यजेत् ।
शेषन्तु विकलीकृत्य सूत्रलब्धा विनाडिका ॥ १ ॥
अन्तरख्यारपेरस्तादाचन्द्रास्तं सिते स्थिताः ।
कृष्णे दिनकरस्यास्तादाचन्द्रोदयमन्तराः ॥ २ ॥
निशार्धचन्द्रगोलघ्नो विषमाङ्घ्री विलिप्तिकाः ।
भाजयित्वा निशार्धेन कलां च विकलां ततः ॥ ३ ॥
नवभिः सर्व्वमाहृत्य नीचाप्तमुपरि क्षिपेत् ।
लीनेनोर्ध्वस्थमाहृत्य लब्धं व्यङ्गुलमिष्यते ॥ ४ ॥
विषुवद् व्यङ्गुलेनैव दक्षिणोत्तरगोलयोः ।
योज्यं शोध्यान्न चेच्छोध्यं व्यक्तये न विशोधयेत् ॥ ५ ॥
यावच्छाया भवेत्तच्च शोधयेद्विगुणात् पदात् ।
न तैश्चाहृत्य नीरार्थयुक्तो सौ भाजको भवेत् ॥ ६ ॥
निशार्द्धविकलाक्षुणसन्नीराः तेन भाजयेत् ।
प्राप्तास्तु विकलाः ज्ञेयाश्शुक्ले पक्षे पराम्बरे ॥ ७ ॥

शोध्यात्तेऽन्तरकालार्त्ताः शेषा यात्रा[1] निशि स्मृताः ।
सान्तराद् विकलाः पिण्डान्निशामानाद्[2] विशोधयेत् ॥८॥
शेषं पूर्वाम्बरे शुक्ले व्यतीताः स्यु र्विनाडिकाः ।
स एव विकलापिण्डः संयुक्तोत्तरसंज्ञितैः ॥ ९ ॥
पूर्वाम्बरस्थे शशिनि कृष्णे याता विनाडिकाः ।
निशामानविलिप्तीषु सान्तरो विकलागणः ॥ १० ॥
शोध्यशेषां[3]गणाः ज्ञेयाः बहुले पश्चिमाम्बरे ।
घटिकाः साधयेदेवं चन्द्रच्छायापदैर्बुधः ॥ ११ ॥
इदानीं लिप्तिकाभिस्तु पदमुत्पादयेद्यथा ।
अन्तरञ्च निशानाथप्रमाणञ्च परस्परम् ॥ १२ ॥
शोधयेद् भागहारः स्याच्छेषः शुक्ले पराम्बरे ।
अन्तरञ्च निशानाथयुक्तरात्रिप्रमाणकम् ॥ १३ ॥
जह्यात् परस्परं शुक्ले भाजकः प्राग्विहायसि ।
निशि व्यतीतकालस्य चान्तरस्य यदन्तरम् ॥ १४ ॥
तदिद्भागहारः स्यात् प्राच्यां कृष्णे निशाकरे ।
सान्तरस्तु निशा याता निशामानविशोधिताः ॥१५॥
कृष्णे तु पश्चिमाकाशे भागहार इति स्मृतः ।
नरसेना निशार्धेन ताडयित्वा तथा पुनः ॥ १६ ॥
इष्टेन भाजकेनाप्तं फलं तीरे समुत्त्यजेत् ।
नताप्तमङ्गुलं शेषं व्यङ्गुलं परिदीपयेत् ॥ १७ ॥
अवच्छायामिह क्षिप्ता दलयेत् पुनरेव तत् ।
[4]चन्द्रच्छायापदं नाम शेषमत्र स्थितम्भवेत् ॥ १८ ॥

इति च्छायानिर्णयः ।

———000———

१ यात्रा । २ निशामान । ३ गता । ४ मन्द्रस्काया ।

दिवाकरे तत्स्पृशि मीनमेषयोः
शशीशिशुर्दक्षिणतुङ्गशृङ्गवान् ।
घटोक्षयोस्तुल्यविषाणवानतोऽ
वशेषराशिश्च यमुत्तरोन्नतः ॥ १ ॥
प्रतिपच्छशिनः शृङ्गं तुङ्गमुत्तरतो मनाक्
नौका चेन्नाविकापत्तः शेषाणां शोभना वचः ॥ २ ॥
अर्द्धोन्नतौ लाङ्गुलवत् पीडातदुपजीविनाम् ।
सुभिक्षञ्च महीपानां शश्वत् प्रीतिरनुत्तरा ॥ ३ ॥
अर्द्धोन्नतं यदा याम्यं शृङ्गं दृष्टहलाह्वयम् ।
बलमुद्योजयेदाशु पाण्ड्यराज्यं निहन्ति च ॥ ४ ॥
उदिते दण्डवच्चन्द्रे गवां पीडा नृपोग्रता ।
समयोः शृङ्गयोः क्षेमसुभिक्षवृष्टयः शुभाः ॥ ५ ॥
मही यस्य शशाङ्कस्य रेखा दुर्भिक्षहारिणी ।
अल्पीयसी तु दुर्भिक्षभयं वितनुते नृणाम् ॥ ६ ॥
उक्तसंस्थानविरहादुत्तरोन्नतशृङ्गवान् ।
शस्यवृष्टिकरो याम्यतुङ्गो दुर्भिक्षकृच्छशी ॥ ७ ॥

इति बिम्बनिर्णयः ।

———ooo———

प्रथमादिषु सन्दृष्टा रेखा चान्द्रमसो नृणाम् !
आयुष्यमर्थमारोग्यं दुर्यशश्च प्रयच्छति ॥ १ ॥
सौभाग्यमर्थलोपश्च भयं शोकं शिवं शुभम् ।
व्याधिश्च धत्ते सूर्य्यादि वारदृष्टः शशीशिशुः ॥ २ ॥
तृतीयाचानुकूलोक्तादिने भार्गववासरे ।
दृष्टो नवशशी कुर्य्याद्वस्त्राप्तिर्मासिकत्रिभिः ॥ ३ ॥

---

१ यमुत्तरोन्नतः ।

नवेन्दुर्यान्यतिक्रान्तः षड्पौर्णाम्न्यान्यनागतः ।
मेषादिद्वादशक्षीणि समोवसतिचन्द्रमाः ॥ ४ ॥
याम्येन शुक्रादिचतुष्टयस्य
यदा शशीचारवशेन याति ।
बीजान्यरण्यम्बुचराश्चहन्या-
द्विशेषतः पावकभीतिकृच्च ॥ ५ ॥
पापो दक्षिणभागिन्दुरनुराधाविशाखयोः ।
प्रशस्तो मध्यनिर्य्यातः पितृदेवविशाखयोः ॥ ६ ॥
भूयोभानां ग्रहाणाञ्च पापो याम्यगतः शशी ।
प्रादक्षिण्योत्तरगतो राजानाञ्च प्रियङ्करः ॥ ७ ॥
भौमस्योत्तरगे चन्द्रे क्षत्रियाञ्च[2] यायिनाम् ।
पार्व्वती बलशालिनां जयो धान्यञ्च वर्द्धते ॥ ८ ॥
सौम्यस्योदग्गतः सोमः कुरुते कोशवर्द्धनम् ।
पूर्णानि सस्यवृन्दानि पौरप्रीतिसुभिक्षकृत् ॥ ९ ॥
गुरोरुत्तरगश्चन्द्रो ब्रह्मक्षत्रियधीधनम् ।
पुष्णाति मध्यदेशस्य सुभिक्षां कुरुतेतराम् ॥ १० ॥
भृगोरिन्दुरुदग्यायी गजवाजी धनुष्मताम् ।
जयकृत्सस्यवृन्दानि पुष्णाति निरुपद्रवम् ॥ ११ ॥
चरन् प्रदक्षिणीकृत्य प्रभाकरसुतं शशी ।
पौराणां बुधमाधत्ते क्षत्रियाणां जयश्रियम् ॥ १२ ॥
यदिदंफलमादिष्टमुत्तरस्थे निशाकरे ।
ग्रहाणामपसव्यस्थे सर्व्वमेतद्विपर्य्ययम् ॥ १३ ॥
प्रयन्तांस्तु नृपांश्च हन्त्युडुपतिः शृङ्गे कुजेनाहते
शत्रुक्षुद्भयकृद्यमेन शशिजेनावृष्टिदुर्भिक्षकृत् ।

---

१ देसा ।    २ क्षत्रियानावयायिनाम् ।

श्रेष्ठान् हन्ति नृपान् महेन्द्रगुरुणा शुक्रेण चाल्पान् नृपान्
शुक्ले चाप्यमिदं फलं ग्रहकृतं कृष्णे यथोक्तागमः ॥१४॥

इति समागमनिर्णयः ।

———o———

आषाढमासे शशिनि स्वात्याषाढप्रजापतीम् ।
प्राप्ते परीक्ष्य प्रसब्दम्ब्रूयाल्लोकेशुभाशुभम् ॥ १ ॥
स्वत्यातषाढा भेवत्तत्र प्रथमांशैः प्रवर्षणम् ।
सुवृष्टिकारणंतद्वद्द्वितीये सस्यकीटकृत् ॥ २ ॥
तृतीये वृष्टिमा द्याय चतुर्थे सर्व्वसस्यकृत् ।
पञ्चमे तिलमुद्गानांश्लेष्मिकानाञ्च वृद्धिदम् ॥ ३ ॥
षष्ठे शारदसस्यानामभिवृद्धिकरम्भवेत् ।
भक्तं दिनं प्रविष्टे तु वृष्टिरस्ति निरन्तरम् ॥ ४ ॥
स्वातियोगशिवायेन्दुरपां वत्ससमीपगः ।
अपां वत्सस्तु चित्रायां समसूत्रमुदस्थितः ॥ ५ ॥

इति स्वातियोगः ।

———ooo———

आषाढयोगे शशिनः सर्व्वबीजानि दैववित् ।
पृथक् पृथक् समान्येव तुलितान्यधिवासयेत् ॥ १ ॥
अधिकं यद्यदन्यत्तु तत्तदब्देभिवृद्धिभाक् ।
यद्बीजमल्पतां यान्ति तस्य हानिं विनिर्दिशेत् ॥ २ ॥

इत्याषाढयोगः ।

———o———

प्राजापत्येन संयोगे तस्येन्दुर्दक्षिणस्थितः ।
नेदीयान् वा दवीयान् वा जगतामशुभात्रहम् ॥१॥

रोहिणीमुत्तरेणेन्दुः स्पृशन् याति यदा तदा ।
वृष्टयः शोभनाः किन्तु सोपसर्गा प्रजा भवेत् ॥ २ ॥
रोहिणीमस्पृशन्निन्दुरुत्तरेण व्रजेद् यदा ।
तदा च वृष्टिर्जगतश्शिवञ्च बहु निर्दिशेत् ॥ ३ ॥
रोहिणीशकटारूढे चन्द्रे निःशरणो जनः ।
पीड्यमानोन्नपानार्थं शिशुभिः क्वापि गच्छति ॥४ ॥
पूर्व्वोदितस्य शशिनो रोहिणी यदि पृष्ठतः ।
चरेच्छुभं तदालोके स्त्रियस्तु पुरुषानुगाः ॥ ५ ॥
पूर्व्वोदितायाः रोहिण्याः पृष्ठतो विचरन् शशी ।
कुरुते कामिनं लोकं प्रमदानां वशे स्थितम् ॥ ६ ॥
रोहिण्यां यदि शीतांशुराग्नेयीं दिशमाश्रयेत् ।
तत्रोपसर्गः सुलभो भस्मपावकसम्भवः ॥ ७ ॥
नैर्ऋत्यामाश्रिते सोमे शस्यानि निहतानि च ।
निचयं यन्ति वायव्यां मध्यमानि भवन्ति हि ॥ ८ ॥
यथेष्टानुदिशां चन्द्रे शोभना वृष्टिसम्पदः ।
अभिवृद्धिःतदार्घस्य शिवञ्च जगतो भवेत् ॥ ९ ॥
छादयेद्यदि बिम्बेन रोहिणी शकटं शशी ।
तदानराधिराजस्य विदधावि वधं वधूः ॥ १० ॥
रोहिणीसहितश्चन्द्रो घनच्छन्नाम्बरेयादि ।
न लक्ष्यते महाव्याधिर्जलं स्यञ्च शोभनम् ॥ ११ ॥
उदकस्थो यदि पौरस्त्येमेघः स्यं शुभं तथा ।
आग्नेय्यामग्निकोपश्च याम्ये शस्यक्षयो भवेत् ॥ १२ ॥
नैर्ऋत्यां मध्यमं शस्यं वारुण्यां वृष्टिकारणम् ।
वायव्यामधिका वृष्टिः सौम्यायां वृष्टिरुत्तमा ॥ १३ ॥

---

१ संस्वायाति यदा तदा ।

घनोदयो यदीशानकोणे स्याद्वृष्टिरुत्तमा ।
तत्तद्दिशि समुद्भूतो वायुश्चेत्तत्फलोदयः ॥ १४ ॥
मासानां श्रावणादीनामीभव्यक्षरमण्डितान् ।
घटान् गन्धपयःपूर्णानुदगादिप्रदक्षिणान् ॥ १५ ॥
महाव्याहृत्तेन मन्त्रेण परिजप्याधि वासयेत् ।
अन्येद्युर्घनवृष्टिघ्नः पूर्णश्शोभनवृष्टिदः ॥ १६ ॥
नृपाणाञ्चाथ देशानां नामान्यालिख्य पूर्व्ववत् ।
इममेव विधिं कुर्य्यात् तेषां भाग्यादिवीक्षणे ॥ १७ ॥
प्रविशत्सु व्रजङ्गोषु विशेद्यद्यग्रतो वृषः ।
पशुर्वा कृष्णवर्णात्मा विज्ञेया वृष्टिरुत्तमा ॥ १८ ॥
शबलो यदि मध्योसावधमो धवलो यदि ।
प्रविशेद्रक्तवर्णश्चेद् व्याधिभिः पीड्यते प्रजा ॥ १९ ॥

इति रोहिणीयोगः ।

———o———

यवगोधूमशाल्यादि शस्यनिष्पत्तिरुत्तमा ।
पाल्यते भूमिपालैश्च भूमिर्नातिकरक्षता ॥ १ ॥
गावो बहुपयस्विन्यो वारिदा भूरिवारिदाः ।
समृद्धिः कुसुमानाञ्च काले हारिणलक्षणे ॥ २ ॥

इति वर्षाधिपतिफलम् ।

———o———

पश्चार्द्धेन सरस्वती [1]मलयजश्रीचन्द्रभागानदी
स्वर्णाल्पपुलिन्दशैलविपिनं सिद्धाश्चविद्याधराः ।

---

१ मलयतः श्रीचन्द्रभागानदी ।

अम्भोजन्मसमस्तवस्तुवनिताः सेनाधिपाः वाजिनः
सर्व्वाः स्वौषधशालयश्चमधुरद्रव्याणितारापतेः ॥ १ ॥
चन्द्रस्य चारस्तद्वर्गे नक्षत्रविषयेषु च ।
पच्यतेमासमात्रेण षस्मासाभ्यन्तरे च वा ॥ २ ॥
यदि कुमुदमृणालहारगौर-
स्थितिनियमात् क्षयमेति वर्धते वा ।
अविकृतगतिमण्डलांशुयोगी
भवति नृणां विजयाय शीतरश्मिः ॥ ३ ॥

इति चन्द्रचरितं नाम तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

अथ भौमस्य चरितं समासेन विभाव्यते ।
फलराशिर्धनं तस्य धीररत्नप्रमा भवेत् ॥ १ ॥
युगाब्दे धनलिप्तानां चाट्टुकालोपि भाजकः ।
ध्रुवोच्चं कुमुदं विद्याद् भौमस्य घटिकादिकम् ॥ २ ॥
तां हित्वा मध्यमांतस्य रविवच्छेषमाचरेत् ।
ध्रुवज्ञौ विकलाभिस्तु भुजाफलमुपानयेत् ॥ ३ ॥
तादिहार्धीकृतं गोलवशादेतस्य मध्यमे ।
योजयेच्छोधयेद्वासौ ध्रुवार्धं प्रथमस्फुटम् ॥ ४ ॥
तच्चलोच्चात् समुधृत्य विद्याद्गोलपदं तथा ।
विधाय पूर्व्ववच्छेषमोजपादफलम्पुनः ॥ ५ ॥
इहाद्यन्ते पदे निसमाद्यन्तज्याभिरानयेत् ।
मध्ययोः पादयोश्चाथ मध्यमज्याभिरानयेत् ॥ ६ ॥

तदप्यर्द्धीकृतं गोलविलोमात् प्रथमस्फुटे ।
योजयेच्छोधयेद्वासौ द्वितयोच्चदले स्फुटः ॥ ७ ॥
ततो ध्रुवोच्चमुद्धृत्य ध्रुवाज्ज्याफलमानयेत् ।
अनधीतं यथागोलं विदध्यात्तस्य मध्यमे ॥ ८ ॥
अयं तृतीयः सकलः ध्रुवस्फुट उदाहृतः ।
तच्चलोच्चात् समुद्धृत्य पादज्ज्याभिर्भुजाफलम् ॥ ९ ॥
आनीय सकलं तच्च गोलक्रमविलोमतः ।
योजयेच्छोधयेच्चाथ तृतीयस्फुटमध्यमे ॥ १० ॥
अयं चतुर्थः सकलस्तुङ्ग स्फुट उदाहृतः ।
अनेनैव यथाविद्यात्तदवशिष्टस्फुटक्रियाम् ॥ ११ ॥
ध्रुवार्द्धस्फुटशून्यत्वात् त्रिस्फुटौ बुधभार्गवौ ।
तयोर्हि मध्यमं विद्यात् प्रथमार्द्धध्रुवस्फुटम् ॥ १२ ॥
ध्रुवोच्चानि कलादीनि सर्व्वेषामेव शोधयेत् ।
सर्व्वत्र तुङ्गविश्लिष्टं मध्यमं केन्द्रमादिशेत् ॥ १३ ॥
रुधिर, ध्रुवका, किमसै, स्तुलसी ।
नतथा, नयता, गुरवो, जुवकाः ॥ १४ ॥
आद्यन्तपादयोर्भौमे रत्नचैत्येन साश्रयः ।
शखामध्येहिमे चायुस्सार्थलोको यशःप्रियः ॥ १५ ॥
कुजमध्यो गुरुस्सक्तो जातजालो धनी धनम् ।
दाधिकक्षम शेपीत नृपतेः शोधयेत्त्रयम् ॥ १६ ॥
तृतीयस्फुटसंसिद्धो वर्त्तमानगुणम्बुधः ।
मध्यभोगेन गुणयेदूर्णनाभेन भाजयेत् ॥ १७ ॥
लब्धमध्यमभोगस्यं शोध्यमाद्यन्तपादयोः ।
मध्ययोः पादयोरेवं ध्रुवभुक्तिरियं मता ॥ १८ ॥

---

१ भोगेस्य ।

तामुच्चभोगतो हित्वा परिशेषेण ताडयेत् ।
तुरीयस्फुटसंसिद्धो वर्त्तमानगुणं पुनः॥ १९ ॥
ऊर्णनाभेन तं हृत्वा फलन्तु ध्रुवभोगतः ।
आद्यन्तपादयोर्देयं शोध्यं मध्यमपादयोः ॥ ३० ॥
वर्त्तमानगुणस्त्वत्र यदि शोध्यं भविष्यति ।
अनाहृत्य तदा पादौ व्यवस्थां योजयेत् सदा ॥ २१ ॥
अशोध्यध्रुवभोगश्चेत् विश्लेषस्साम्प्रतं तदा ।
स्फुटभुक्तिरियं यद्वा स्फुटयोरन्तरम्भवेत् ॥ २२ ॥
अतीतमनतीतञ्च संक्रान्तिञ्चार्कवद् वदेत् ।
हृतास्फुटविलिप्तास्तु ज्ञानपादेन राशयः ॥ २३ ॥
छेदतश्शोधितं शेषं भुक्तेरल्पतरं यदि ।
तदा वक्रस्य सङ्क्रान्तिनाडिः प्राग्वाद्विधीयते ॥ २४ ॥

## इति सङ्क्रान्तिनिर्णयः ।

---

ग्रहाः कुजादयः सूर्यस्फुटादभ्यधिकस्फुटाः ।
प्रतीच्यां दिशि दृश्यन्ते प्राच्यामूनस्फुटाः पुनः ॥ १ ॥
कुजोस्तमेति वारुण्यां पूर्व्वस्यामुदयस्तथ ।
विद्यादन्तरवाक्यञ्च भौमस्य निधिशोभनम् ॥ २ ॥
उदधृत्य भौमतः सूर्यं शेषंकुर्य्याद्विलिप्तिकाम् ।
सा चेन्महीयसी वाक्याद् ग्रहो नास्तमितो भवेत् ॥ ३ ॥
अल्पीयसी यदि भवेत् तदा यातोस्तमिष्यते ।
किञ्चिदना यदि भवेदस्तमायाति तद्दिने ॥ ४ ॥
हित्वा वाक्ये महीयसीस्य विवरेण विभाजयेत् ।
लब्धं दिवसनाड्यादि जानीयादस्तमेष्यति ॥ ५ ॥
वाक्यादल्पीयसीं हित्वा दिनादस्तस्य भाजितम् ।

किञ्चिदूनान्तु विश्लिष्य लब्धमस्तमये कला: ॥ ६ ॥
ज्ञीप्सुरस्तोदयं व्यक्तं ग्रहाद् भास्करमुत्त्यजेत् ।
शेषे विलिप्तिकामूर्त्तौ नास्तो वाक्यं महीयसी ॥ ७ ॥
यदा तु वाक्यं देशीयस्तदार्कात् सप्तमस्य तु ।
राशेः संस्कृतवाक्येन ताडयित्वाथतम् पुनः ॥ ८ ॥
अनूनपादैर्विभजेत् ततो लब्धविनाडिकाः ।
समाश्चेत् पूर्व्ववाक्येन तदा यातोस्तमिष्यते ॥ ९ ॥
अर्कग्रहान्तरं कृत्वा विकलं वाक्यतस्त्यजेत् ।
शेषेगस्रन्तरेणाप्तं दिनादिकमुदेष्यतः ॥ १० ॥
उदयँद्रष्टुकामस्य स्फुटं भास्करतस्त्यजेत् ।
शेषे विलिप्तिकामूर्तौ वाक्यादूने तु नोदितः ॥ ११ ॥
देश्यश्चेदुदितस्तत्तु यो राशिर्भास्कराश्रितः ।
तस्य संस्कृतवाक्येन ताडयित्वाथ पूर्व्ववत् ॥ १२ ॥
लब्धाः विनाडिकाः पूर्व्ववाक्येन सदृशाः यदि ।
तदादिगोचरो भौमस्तादृशौ धिषणासितौ ॥ १३ ॥

इति उदयास्तमयनिर्णयः ।

---

मध्यमस्य च शुद्धस्य स्फुटस्य च यदन्तरम् ।
तदर्द्धीकृत्य संशोध्यमुभयोरधिकान्तयोः ॥ १ ॥
शुद्धश्चलोऽश्वतस्त्यक्त्वा शेषं कुर्य्याद्विलिप्तिकाम् ।
ज्ञानप्रतापैराहृत्य लब्धा ग्रहगतिर्भवेत् ॥ २ ॥
आद्या शीघ्रा परा मन्दा वक्रा नाम ततः परम् ।
अतिवक्रा तु वक्रा च षष्ठी चारगतिः क्रमात् ॥३॥
तृतीयस्फुटसंसिद्धौ पादश्चेत् प्रथमो भवेत् ।
तदाचारगतिं विद्याच्चतुर्थं चेत् पदम्भवेत् ॥ ४ ॥
वक्रारम्भं द्वितीयश्चेदतिवक्रगतिं तथा ।

तृतीये क्रवनिर्य्याणमेवं विद्याद्विचक्षणः ॥ ५ ॥
स्फुटग्रहश्चे च्छीघ्रोच्च ग्रहतोनवमो यदा ।
वक्रारम्भितदाप्रायः पञ्चमश्चेन्निवर्त्तते ॥ ६ ॥
अतिशीघ्रस्य भौमस्य स्फुटभोगविनाडिकाः ॥
समयान्तातिरिच्येत न्यूनता तु गतेर्व्वशात् ॥ ७ ॥
चलोच्चतस्ससमुद्धृत्य तृतीयस्फुटमध्यमम् ।
विलिप्तीकृत्य विभजेत् तद्ध्रुवस्फुटभोगयोः ॥ ८ ॥
विवरेण ततो लब्धं केन्द्रे गतिदिनम्भवेत् ।
विलिप्तीकृत्य वक्रार्द्धं विवरेण विभाजिते ॥ ९ ॥
लब्धं वक्रार्धदिवसं तदिदं भवति त्रिधा ।
मूर्ध्नि वक्रगुणश्शोध्यस्तृतीये योज्य इष्यते ॥ १० ॥
एतेषु त्रिषु यद्येको राशिः केन्द्रदिनैस्समम् ।
तेविद्यात्क्रमाद्वक्रस्यादिमध्यान्तगं ग्रहम् ॥११॥
भूमिपुत्रस्य वक्रज्ज्या नाभिरित्यभिधीयते ।
अथ चैवं विजानीयाद्वक्रारम्भनिवर्त्तनम् ॥ १२ ॥
चतुर्थस्फुटकेन्द्रश्चेज्जीवशर्म्मप्रियो यदा ।
वत्सलः केन्द्रचारो वा वक्रारम्भी तदाकुजः ॥ १३ ॥
चतुर्थस्फुटकेन्द्रश्चेत् सामप्रभवयोगदः ।
चन्द्राभं केन्द्रचारो वा तदासौ विनिवर्त्तते ॥ १४ ॥
सवर्णमिष्टकेन्द्रस्य वक्राद्यन्तोक्तयोरपि ।
विश्लेषं विभजेद् भुक्तयोर्विवरेणोच्चमध्ययोः ॥ १५ ॥
दिनादिराप्यते काले वक्रारम्भावसानयोः ।
हीनैश्च केन्द्रे भावित्वं तयोर्भूतत्वमन्यथा ॥ १६ ॥
चारोदयास्तवक्रादौ सर्व्वेषां गणितक्रिया ।
इयमेव विशेषस्तु तत्र तत्रैव वक्ष्यते ॥ १७ ॥

इति गतिनिर्णयः ।

——oo——

सप्ताष्टनवमर्क्षेषु वक्रमुष्णं महीभुवः ।
उदयाद् वह्निवृत्तीनां पीडाकरमिदं मतम् ॥ १ ॥
वक्रमश्रु मुखानां हि दशादर्क्षत्रयेपि च ।
उदयार्क्षाद्रसान् हन्ति कुर्य्याद्रोगान् नवग्रहम् ॥ २ ॥
वक्रंत्रयोदशर्क्षादि द्वितयोऽन्याल उच्यते ।
सूर्य्योदयर्क्षादुन्यालेभ्यो भयं धत्ते सुभिक्षताम् ॥ ३ ॥
वक्रं रक्तानन पञ्च दशर्क्षात् षोडशादपि ।
तदा सुभिक्षासमयो मुखरोगश्च जायते ॥ ४ ॥
तत्खड्गमुशलं सप्तदशादष्टादशादपि ।
अवृष्टिशस्त्रदस्युभ्यः पीडां धत्ते भयो त्तरम् ॥ ५ ॥
भाग्यादिद्वितये दृष्टो विश्वे यदि निवर्त्तते ।
अस्तमायाति रोहिण्यां भौमस्त्रैलोक्यघातकः ॥ ६ ॥
श्रवणाभ्युदितः पुष्ये वक्रकृद्राजपीडकः ।
यत्रर्क्षेऽभ्युदितस्तत्र जातान् हन्ति जनान् कुजः ॥ ७ ॥
श्रवणादित्यहस्तैकपादमूले मघासु च ।
रोहिण्याश्विविशाखासु भौमचारोदयाहितः ॥ ८ ॥
उत्तरत्रितये मूलप्रजापत्येन्द्रविष्णुषु ।
विचरन्क्षितिजो वारी वाहानामुपघातकृत् ॥ ९ ॥
मघानां यदि मध्येन निर्गच्छेल्लोहितस्तदा ।
विनश्येत् पाण्डुराज्यन्तु शस्त्रानावृष्टिभिर्भयम् ॥ १० ॥
भिन्दन् मघां विशाखां वा भौमो दुर्भिक्षकृन्मतः ।
भिनत्ति रोहिणीं यद्वा कुरुते मरकं नृणाम् ॥ ११ ॥
रोहिणीयाम्यगो भौमी वृष्टिमर्घञ्च नाशयेत् ।
धूमायमानः सशिखः पारियात्रान् विनाशयेत् ॥ १२ ॥
भयं सुमरुतो वह्निर्जृम्भं नो पश्यते हतः ॥
वृष्टिःकुत्रचिदेव स्यात् सस्यं शुष्यति नूतनम् ॥ १३ ॥

निष्पन्नान्यपि सस्यानि हरन्त्यविनयात् परे ।
भूपैर्निस्वीकृतो लोको न सम्यक् परिपाल्यते ॥ १४ ॥
व्यथन्ते व्याधयो भूयो भुजङ्गाश्च विषोल्बणाः ॥
सम्वत्सरे च मासे च वारे च वसुधा भुवः ॥ १५ ॥

इति वर्षाधिपतिफलम् ॥

---

तापी शोणः पयोष्णी त्रिदशपतिसरिद्गोमतीवेत्रवत्य ।
श्चोलानाशिक्यविन्ध्याक्षितिधरनिलयाः ये विदेहाश्चकाशी
देशाः कोङ्कणाख्या मलयपरिसराः कुन्तलाः केरला वा
मध्याः भूपाः कुमाराः सकटुकमखिलं सौगते चापि भौमे १
भौमस्य चारे तद्वर्गे नक्षत्रविषयेषु च ।
मासेनवाष्टभिर्मासैर्विदधाति शुभाशुभम् ॥ २ ॥
विपुलविमलमूर्तिः किंशुकाशोकवर्णः
स्फुटरुचिरमयूखस्तप्ततामप्रभाभः ।
विचरति यदि मार्गञ्चोत्तरं मेदिनीजः
शुभकृदवनिपानां हार्दकृच्च प्रजानाम् ॥ ३ ॥

इति भौमचरितनाम चतुर्थोध्यायः ।

---

## पञ्चमोऽध्यायः ।

---

अथ प्रस्तूयते सोमपुत्रस्य चरितं लघु ।
अनुनीतिफलं तस्य प्रमाणं दिवसाधिपः ॥ १ ॥
कर्पूरो नीपवद्धाब्दे घनलिप्ता विभाजकः ।
ध्रुवोच्चं रोहिणेयस्य शुभांशक इति स्मृतम् ॥ २ ॥

शशिजा ध्रुवका वरगश्चमती ।
विजयं सय गतिनुत् खरनुतो ॥ ३ ॥
बुधाद्यन्तस्तदाक न्या सोमो नान्ये नदीधनतो ।
क्रूरोथानन्तरोर्थज्ञो नदीमानमिति क्रमात् ॥ ४ ॥
बुधमध्यादधोगौरी युधि सर्पो नदीनृपः ।
धर्म्मौभानुर्वने नूनं सलिलान्ते द्वयन्त्यजेत् ॥ ५ ॥
आशयोरुभयोरेव बुधस्यास्तोदयौ मतौ ।
एतस्यान्तरवाक्यञ्च नृपमौलिरितिस्थितम् ॥ ६ ॥
उदयोस्तमयोर्वास्य यदा स्यात् पश्चिमाम्बरे।
सप्तमोदयवाक्येन संस्कृतेन विवर्द्धयेत् ॥ ७ ॥
यदा स्यात् पूर्व्वदिग्भागे तदार्कोदयसंस्कृतम् ।
वाक्यन्ताधनराशिःस्या च्छेषः प्राग्वदिशः स्मृतः ॥ ८ ॥
अतिशीघ्रस्य भौमस्य स्फुटभोगविनाडिका ।
भिन्नासन्ततिरिच्येते वक्रज्यानयनम्भवेत् ॥ ९ ॥
द्वितीयस्फुटकेन्द्रश्चेत् सोमहारपटुर्यदा ।
धावनं केन्द्रचारो वा वक्रारम्भी तदा बुधः ॥ १० ॥
तृतीयस्फुटकेन्द्रेश्चेद्दशमी कार्त्तिकी यदा ।
अर्थःकेन्द्रदिनं वापि तदासौ विनिवर्त्तते ॥ ११ ॥
नोत्पातरहितश्चान्द्रि रुदयत्युषितो यदि ।
अर्घस्य वृद्धिं हानिं वा करोत्यग्न्य निलाम्बुकृत् ॥ १२ ॥
श्रवणाषाढवैशाखमघापौष्णषु चन्द्रजः ।
दृष्टो लोकस्य भयदं प्रोषितश्शोभनम्भवेत् ॥ १३ ॥
माघेश्वयुजि दृश्येत कर्तिके वापिचन्द्रजः ।
चोराग्निशस्त्ररोगान् क्षुद्भयानि कुरुततदा ॥ १४ ॥
धनिष्ठाविश्वदेवेन्दुरोहिणीश्रवणेषुच ।
विमर्द्यविचरन् सौम्यो रोगावृष्टिभयावहः ॥ १५ ॥

आर्द्रादिपञ्चतारासु विचरेद्रोहिणीसुतः ।
शस्त्रक्षुद्रोगदुर्वृष्टिभयं धत्ते वपुष्मताम् ॥ १६ ॥
हस्तादिशक्रपर्यन्तमुत्पीड्य विचारन् बुधः
गवामशुभकृन्नूनेह रसार्घानाञ्च वर्द्धयेत् ॥ १७ ॥
मृदूनन् वारुणमूलाश्विरेव तींचन्द्रनन्दनः ।
भिषक्पण्यतुरङ्गानां जलजानाञ्च घातकः ॥ १८ ॥
दूतबालकवानाञ्च षण्डहास्यविदामपि ।
शिलोच्चयजुषामम्बुजन्मिनाञ्च सुखोत्तरम् ॥ १९ ॥
गान्धर्व्वनृत्यलेख्यस्त्रगणितादिविदाम्प्रियः ।
वर्त्तते दण्डनीतिश्च समये रोहिणीभुवः ॥ २० ॥

इति वर्षाधिपतिफलम् ।

———:o:———

गम्भीरासरयूश्च लोहितसरित्पद्मावनीलाचलो ।
गोमन्तः शठशूत्रमागधजनाः दूतेङ्गितज्ञादयः
चित्रज्ञाः लिपिशिल्पकर्म्मनिपुणा मन्त्रेन्द्र जालादिषु
पौषस्याज्यतिलादिबीजमखिलं सौम्यस्य वर्गे भवेत् ॥१॥
सौम्यस्यवारस्तद्वर्गे तदार्क्षविषयेषु च ।
आदर्शनात्तु मासानां त्रयेणापि विपच्यते ॥ २ ॥
हेमकान्तिरथ वा शुकवर्णः सण्यकेन मणिना सदृशो वा ।
स्निग्धमूर्तिरलघुश्च विधत्ते सर्व्वलोकविजयं शशिपुत्रः ॥३॥

इति बुधचरितनाम पञ्चमोध्यायः ।

——— ;o: ———

## षष्ठोऽध्यायः ।

—:*०*:—

अथ जीवस्य चारितं संक्षेपेण प्रणीयते ।

ज्ञानाब्धिफलमेतस्य धनवद् भाजकः प्रभा ॥ १ ॥
श्रीधर्म्मवाक्यलिप्ताना म्नणयाब्दे विभाजकः ।
ध्रुवोधनाङ्गलोकस्य भौमवत् स्फुटसाधनम् ॥ २ ॥
* विषनन् ध्रुवका विचलन्नतुलः ।
† गरगश् शतरुत् पथिको हिमनुत् ॥ ३ ॥
धिषणाद्यन्तपादाज्ज्यास्तटतोतनुलक्ष्मणौ ।
जितवान्नून मतेच्च कश्चलन् तस्करानलम् ॥ ४ ॥
जीवस्य मध्यश्रीसिद्धो धूपादानं सनीतिनुत् ।
धातुलग्नं दिवाकिणु धावनेनान्त्यमुंसजेत् ॥ ५ ॥
अर्थन्धरा सुरेद्यस्य भवेदन्तरवाक्यकम् ।
उदयास्तमया वस्य सर्व्वथाभौम वन्मतौ ॥ ६ ॥
अतिशीघ्रस्य जीवस्य स्फुटभोगविनाडिकाः ।
गीतिकाञ्चाति रिच्येत वक्राजज्यानूतनं भवेत् ॥ ७ ॥
चतुर्थस्फुटकेन्द्रश्चेत् सज्ञानामधुना यदि ।
केन्द्रे दिनं शिवास्यं वा वक्रारम्भी तदा गुरुः ॥ ८ ॥
चतुर्थस्फुटकेन्द्रश्चेत् क्रमुकोल्लासको यदि ।
केन्द्रामधर्म्मरत्नं वा तदासौ विनिवर्त्तते ॥ ९ ॥
गुरुश्चरति यत्रर्क्षे तदाख्यः शरदः क्रमात् ।
द्वादशाग्ने यमारभ्य चतुर्भोभद्रयान्विताः ॥ १० ॥
पञ्चमाभतयो पेताः ततः पञ्चविभान्विताः ।
त्रिभ्रान्तमविधिश्चेति विद्यान्मासक्रमादिमाः ॥ ११ ॥
कार्त्तिकेब्दे गवां त्वार्त्तिः शकटानलजीविनाम् ।
रोगोस्त्रकोपः पीताभः रक्ताभः कुसुमोदयः ॥ १२ ॥
सौम्ये वर्षे भयं व्याधेः मृगाखुशलभाण्डजैः ।

---

* धिषण ध्रुवकां ' † हरगश् ।

सस्यहानिरनावृष्टिर्भूभुजाम्भूरि वैरिता ॥ १३ ॥
पौष्ये वर्षे जगद्वृद्धिर्वीतवैराश्च भूभुजः ।
सिद्ध्यन्ति पौष्टिकारम्भा धान्यार्घस्त्रिगुणो भवेत् ॥१४॥
माघे वर्षे धनारोग्यं वृष्टिधान्यार्घवृद्धयः ।
उदयः सर्व्वभूतानां सुलभा मित्रसम्पदः ॥ १५ ॥
फाल्गुनी वत्सरे वृष्टिः सस्यक्षेमाक्वचिद्भवा ।
दस्युकोपो नृपाश्चोग्राः वैरूप्यमपि योषिताम् ॥ १६ ॥
चैत्रेब्दे दुर्लभा वृष्टिः प्रियमन्नं नृपो मृदुः ।
कोशधान्यविवृद्धिश्च पीडा रूपवतामपि ॥ १७ ॥
वैशाखेब्दे जगत् सर्व्वं तुष्टिधर्म्मपरायणम् ।
सम्पद्यन्ते च सस्यानि नृपाणामभयं तदा ॥ १८ ॥
ज्यैष्ठे कुलधनश्रेणी श्रेष्ठा धर्म्मरताः नृपाः ।
पीड्यते सस्यजातिश्च शमीकङ्गुविवर्ज्जिता ॥ १९ ॥
आषाढे सस्यसम्पत्तिः क चिद् दुर्वृष्टिरेव च ।
स्वार्थेषु सक्ताश्च भूपालाः क्षेमं प्रत्यन्तवासिनाम् ॥ २० ॥
श्रावणेब्दे नृपाः क्षेमाः सम्यक् सस्यश्च पच्यते ।
पीड्यन्ते क्षुद्रपाषण्डाः तद्भक्ताश्चैव जन्तवः ॥ २१ ॥
वर्षे भाद्रपदे पूर्व्वसस्यवल्लीजसम्पदः ।
क्वचित् सुभिक्षमभयं तद्विरुद्धं क चिद्भवेत् ॥ २२ ॥
वर्षे चाश्व युजे वारि भूरि वर्षति वारिदः ।
प्रजाः प्रमुदिताः क्षेमं सुभिक्षञ्च दिने दिने ॥ २३ ॥
ऋक्षस्योत्तरपार्श्वेन विचरन् वृहतां पतिः ।
क्षेमारोग्यसुभिक्षाय विपरीताय याम्यगः ॥ २४ ॥
वधो भूपस्य निर्दिष्टो दिवादृष्टे वृहस्पतौ ।
धूमायमाने रात्रौ वा वृष्टिनिग्रहमादिशेत् ॥ २५ ॥

## इत्याग्नेयादिवर्षफलम् ।

——:o:——

कलेर्वर्षात्परारम्भं हित्वा शेषं द्विधा कृतम् ।
ऊर्ध्वस्थं भानुनाभ्यश्चत्परं लोपहतं द्विधा ॥ २६ ॥
अधःस्थं द्विगुणीकुर्य्यात् नीचाप्तमुपरिक्रमात् ।
उपरिष्ठात्ततोधःस्थमब्दं मासोनगाः हृताः ॥ २७ ॥
मुनीक्षा निश्चलं तस्मिन् दिवसादि विनिक्षिपेत् ।
मूलाब्दे तदिदं क्षिप्त्वानूत नैर्मण्डलं सजेत् ॥ २८ ॥
युगानि मुनिलब्धानि शेषास्तु क्रमशः समाः ।
वैष्णवं जैवमैन्द्रञ्च ज्वलनं त्वाष्ट्रमेव च ॥ २९ ॥
औत्तरं प्रौष्ठपादञ्च पैत्रं वैश्वमथैन्दवम् ।
इन्द्राग्निदेवमाश्विन्यं भाग्यञ्चेति द्विषदुक्रमात् ॥ ३० ॥
वैष्णवादीनि चत्वारि प्रशस्यन्ते युगानि हि ।
त्वाष्ट्रादीनि च चत्वारि मध्यमानि विदुर्बुधाः ॥ ३१ ॥
ऐन्दवादीनि चत्वारि हीनानीति विनिर्दिशेत् ।
एतेषु युगमेकैकं पञ्चाब्दप्रमितम्भवेत् ॥ ३२ ॥
यदत्र संस्कृतं वर्षमपरिसक्तमण्डलम् ।
घनेन ताडयित्वा तान्मासांश्च दिवसान्यपि ॥ ३३ ॥
दत्वोपरि यथा शेषमुपरिष्ठान्नवाहृतम् ।
वस्वादितारावक्रः स्याच्छेषांशे गुरुनिश्रितः ॥ ३४ ॥
आद्यमंशं धनिष्ठायां प्राप्यमाघं यदा गुरुः ।
उदयं यात्यसौ विष्णुयुगे प्रथमवत्सरः ॥ ३५ ॥
प्रभवाख्यमिदं वर्षं क्वचित् क्वचिदवृष्टिकः ।
वाताग्निश्लेष्मा कोपः स्यान्नातिदुःखकरन्नृणाम् ॥ ३६ ॥
क्रमेण विभवः शुक्लः प्रमोदश्च प्रजापतिः ।

संवत्सरा विष्णुयुगे शुभदाश्चोत्तरोत्तरम् ॥ ३७ ॥
एषु सर्वेषु भवति निर्भयं निरुपद्रवम् ।
सम्पन्नसस्यंसंहृष्टप्रजाराजान्विता भूः ॥ ३८ ॥
अङ्गिराः श्रीमुखोभावो युवाधातेति वत्सराः ।
युगे द्वितीये प्रथमं त्रयं भद्रं समीपरे ॥ ३९ ॥
त्रिष्वाद्येषु सुवृष्टिश्च निरातङ्कभयाः प्रजाः ।
समा वृष्टिर्द्वये तस्मिन् किन्तु रोगाः रणागमः ॥ ४० ॥
ईश्वरोबहुधान्यश्च प्रमाथी विक्रमो वृषः ।
पञ्चैते वत्सराः विद्धिराखण्डलयुगे स्मृताः ॥ ४१ ॥
आदिमौ कृतदेशीयौ तृतीयः पापपाकदः ।
सुभिक्षकारकावन्त्यौ किन्तु रोगभयप्रदौ ॥ ४२ ॥
चित्रभानुः शुभोभानुस्तारणसाथपार्थिवः ।
व्ययश्चेति क्रमादेते वत्सराःदाहनेयुगे ॥ ४३ ॥
आद्यः श्रेष्ठः परोरुग्रः तृतीयो भूरिवारिदः ।
चतुर्थः सस्यसंरक्षी पञ्चमः सततोत्सवः ॥ ४४ ॥
सर्व्वजित् सर्व्वधारीच विरोधी विकृतःखरः ।
पञ्चैते पञ्चमेशस्तो द्वितीयोनैवचापरे ॥ ४५ ॥
नन्दनोविजयः षष्ठे जयमन्मथ दुर्मुखाः ।
त्रयोत्र शस्ताः प्रथमे द्वावन्यौ फलमध्यमौ ॥ ४६ ॥
हेमलम्बो विलम्बी च विकारीसर्व्वरीप्लवः ।
पञ्चैताःरशदो विद्धिर्युगेपैत्रे विनिश्रिताः ॥ ४७ ॥
इति प्रायः प्रचुरपवना वृष्टिराद्येतु वर्षे ।
मन्दं सस्यं न बहुसलिलं वत्सरेतो द्वितीये ।
अत्युद्वेगः प्रचुरसलिलः स्याचृतीयश्चतुर्थो
दुर्भिक्षायप्लव इति ततः शोभनो भूरितोयः ॥ ४८ ॥

शोभकृच्छुभकृत् क्रोधी विश्वावसुः पराभवः ।
एतानि पञ्चवर्षाणि युगेस्युर्विश्वदैवते ॥ ४९ ॥
पूर्व्वापरौ प्रीतिकरौ तृतीयो बहुदोषदः ।
द्विजभागोभयदावन्यौ शस्त्राग्निर्व्याधिकोपदः ॥ ५० ॥
प्लवङ्गः कीलकः सौम्यस्तथा साधारणाह्वयः ।
रोधकृच्चेति पञ्चैताः शरदः शशिनो युगे ॥ ५१ ॥
आद्यःकष्टोन्तिमो मध्यस्तुरियं से तिरम्बुदः ।
अपरौ शुभदौ रोगभयदौ नातिमृत्युदौ ॥ ५२ ॥
परिधावी प्रमादी वा नन्दनोराक्षसोनलः ।
एतानि पञ्चवर्षाणि युगे इन्द्राग्निदैवते ॥ ५३ ॥
आद्योमध्यमदेशघ्नो नृपहाल्पजलप्रदः ।
अलसः साग्निकोपश्च द्वितीयो रोगमृत्युदः ॥ ५४ ॥
तृतीयस्तुष्टिमाधत्ते तुरीयः क्षयकारकः ।
ग्रीष्मधान्यकरः किन्तु पञ्चमोऽग्निभयप्रदः ॥ ५५ ॥
पिङ्गलः कालयुक्तश्च सिद्धार्थोरौद्रदुर्मती ।
एतान्येकादशेऽब्दानि तत्राद्योबहुवृष्टिदः ॥ ५६ ॥
द्वितीयं बहुदोषञ्च तृतीयं शोभनं स्मृतम् ।
तुरीयं क्षयकृन्मध्यवृष्टिदः पञ्चमं भवेत् ॥ ५७ ॥
दुन्दुभिश्चततोद्गारी रक्ताक्षः क्रोध एव च ।
विरोधश्चेति पञ्चैते भाग्ये संवत्सराः युगे ॥ ५८ ॥
आद्यः सस्यकृदन्यस्तु नृपघोविषमाम्बुदः ।
तृतीयोदंष्ट्रिभयकृत्तुरीयं क्रोशवर्द्धनम् ॥ ५० ॥
अन्तिमः कुरुते राष्ट्रं शून्यतां बहुयुद्धताम् ।
एवं शुभाशुभं विद्यात् षष्टिवर्षसमुद्भवम् ॥ ६० ॥

इति षष्टिसंवत्सरनिर्णयः ।

—:o:o:—

क्षितिरुत्तमसस्याढ्या भवेद्राजान्वती चसा ।
उदयो यज्वनाभश्च द्विपगोकुलवृद्धयः ॥ ६२ ॥
सम्यग्वर्षति कालेन धरायां मेघवाहनः ।
प्रजाप्रमोदते भूयः समये सुरमन्त्रिणः ॥ ६२ ॥

इति वर्षाधिपतिफलम् ।

——:o:o:——

सौवीरा भरताः ससिन्धुतटजास्त्रैगर्त्तमत्स्योद्भवाः
सर्व्वाः क्षत्रियसम्पदश्च सुधियः सर्व्वं भिषग्वस्तु च ।
ये सेवावृतसत्यधर्म्मनिरतास्तृष्णाभिचारक्षमा-
श्चार्य्यापौरतलावकद्रुतिलया जीवस्यवर्गेभवेत् ॥ ६३ ॥
वारे जीवस्य तद्वर्गे तारकाविषयेषु च ।
अर्द्धाधिकेन वर्षेण विदधाति शुभाशुभम् ॥ ६४ ॥
अकलुषांशुजटिल स्फुटमूर्त्तिः
कुमुदकुन्दकुसुमस्फाटिकाभः ।
सुरगुरुः सकललोकविवृद्धिं
वितनुते यदि परैरविनष्टः ॥ ६५ ॥

इति जीवचारितन्नाम षष्ठोध्यायः ।

——:o○o:——

## सप्तमोऽध्यायः ।

——:o:o:——

अथ ब्रवीमि चरितं भार्गवस्य समासतः ।
निदानं फलमेतस्याधिवासः प्रमितम्भवेत् ॥ १ ॥
देवासुरो धनक्षादिभाजकोयुगवत्सरैः ।
शिवार्च्चनं ध्रुवोच्चैःस्यात् सौम्यवत्सर्व्वमिष्यते ॥ २ ॥

अनुलोमदशाभेदमेवं विद्याद्विचक्षणः ।
प्रतिलोमदशाभेदः संक्षेपात्कीर्त्यते ऽधुना ॥ १ ॥
दिवाजातस्य विज्ञेया भास्वतः प्रथमा दशा ।
निशाजस्य[1] दशां चेन्दोरन्ते लग्नदशा भवेत् ॥ २ ॥
ततः परं दशाभेदं तत् कालबलिनां क्रमात् ।
[2]उभयत्रापि च होरायां फलं तत्पतिसन्निभम् ॥ ३ ॥
दशाग्रहाणां तत्कालमित्रोदासीनविद्विषाम् ।
श्रेष्ठा मध्याश्च कष्टाश्च क्रमेण परिकीर्त्तिताः ॥ ४ ॥
स्वक्षेत्रोच्चांशभाजाश्च मित्रराशिजुषामपि ।
स्वोच्चाभिलाषिणाञ्चापि दशाः श्रेष्ठा नचापरः ॥ ५ ॥
अनुलोमदशातुल्यमितरं सर्व्वमिष्यते ।
आयुर्दायविधानेषु सावनं मानमाचरेत् ॥ ६ ॥
दशारम्भे शशी श्रेष्ठः सुहृद्वर्गगतोऽपि वा ।
निजवर्गगतोवापि स्वोच्चसेवितसत्तमः ॥ ७ ॥
योगे ऽधिमित्रयोरिष्टं पूर्णमसन्ततोऽन्यथा ।
योगेऽधिद्वेषिणोः पापं पूर्णमसन्ततोऽन्यथा ॥ ८ ॥

**इति दशाविपाकादेशोनामत्रयोदशोऽध्यायः ।**

## चतुर्दशोऽध्यायः ।

अतः परं प्रवक्ष्यामि ग्रहगोचरपूर्व्वकम् ।
विधिमिष्टकवर्गस्य वराहमिहिरोदितम् ॥ १ ॥
शीतांशुर्म्मृष्टमन्नं जनयति विचरज्जन्मिनां जन्मराशौ
हर्षं [3]दैत्येयमन्त्री दिवसकरकुजौ शत्रुपक्षस्य वृद्धिम् ।

१ निशाजातस्य ॥ २ उभत्रापि ॥ ३ दैत्येन्द्र ॥

हानिं कुर्य्यादसूनां किरणपतिसुतो वञ्चनं सोमसूनु
र्नित्यं निर्धूतबुद्धिं प्रबलरिपुभयं वित्तनाशञ्च जीवः ॥२॥
भेदं मित्रजनैः करोति दिनकृत् क्लेशामयं चन्द्रमाः
सौरिर्वित्तविनाशकृद्धनकरस्तारापतेरात्मजः ।
हानिं भूमिसुतः करोति महतीं वृद्धिं भृगोरात्मजो
ज्ञानं दीपयति द्वितीयभवने जीवो नृणां निर्वृतिम् ॥ ३ ॥
स्थिता भ्रातृस्थाने दिनकरमहीजार्कतनयाः
स्थिरां स्थानप्राप्तिं दधाति धनलाभञ्च परमम् ।
विनाशं शत्रूणां जनयति शशी शुक्रसहितः[1]
परं हृत्सन्तापं सुरगुरुबुधावापि कुरुतः ॥ ४ ॥
भूयः शास्त्रवि[2]बोधितामपि धियं मूढीकरोत्यङ्गिरा
घोरां दुखपरम्परां दिनकरः कुक्ष्यामयं चन्द्रमाः ।
लाभं सोमसुतः करोति भृगुजो नित्यं श्रिया सङ्गमं
भौमः शत्रुकरश्चतुर्थभवने सौरिश्च वित्तक्षयम् ॥ ४ ॥
विप्रं सूर्यसुतःसुतोविप्रतुलं कामक्षतिं चन्द्रमाः ।
दोषोत्पत्तिमनेकशः क्षितिसुतः प्रायोवियोगं रविः ।
सौभाग्यं विदधाति सोमतनयः पुष्टिं परां भार्गवः
कुर्य्यात्पंचमराशिगः सुरगुरुर्नित्यं नृणां निर्वृतिम् ॥ ६ ॥
स्थिताः षष्ठे राशौ दिनकरमहीजार्कतनयाः
बुधश्चन्द्रश्चैवं प्रचुरधनलाभं विदधति ।
समृद्धिं शत्रूणां मनसि च विषादं गुरुभृगू
नराणां कुर्व्वन्तौ युवतिकृतवैरञ्च परमम् ॥ ७ ॥
अर्कः सन्तापमन्तर्ज्जनयति शशभृत् सौख्यमत्यन्तलाभं
भौमो रोगाभिवृद्धिं विबुधपतिगुरुर्वस्तुलाभं विधत्ते ।

---

१ शशिशुक्रसहितः । २ विधियं च ॥

सौम्यो योषिद्विवादं विरचयतिभृगुर्विप्रवासं गुरुस्तः
स्थानभ्रंशं विशेषाद्रचयति रविजः सप्तमर्क्षप्रयातः ॥ ८ ॥
सूर्य्यःशत्रुशतं करोति हृदयातङ्कं शशाङ्को नृणां
भौमो लोहितरोगवृद्धिमतुलं कल्याणमिन्दोः सुतः ।
जीवो जीवविनाशतुल्यविपदं स्त्रीसम्पदं भार्गवः
सौरिःप्राणनिरोधकारणकरःस्यादष्टमक्षेत्रगः ॥ ९ ॥

भानुःकरोत्यामयमिन्दुरार्त्तिं
भौमःशुभं चन्द्रसुतो ऽपवादम् ।
जीवःप्रमोदं भृगुरर्थलाभं
मन्दः प्रवासं नवमर्क्षयातः ॥ १० ॥
धत्ते रविर्मुदमनन्तसुखं मृगाङ्कः
क्लेशं कुजः शशिसुतो धनलाभमुच्चैः ।
जीवः परं परिभवं भृगुरर्थलोपं
सौरिस्तु मानसरुजं दशमर्क्षयातः ॥ ११ ॥
एकादशक्षेत्रगताः समस्ताः
कुर्वन्ति वृद्धिं महतीं नराणाम् ।
सर्वेऽपि ते द्वादशराशियाताः
तन्वन्ति चिन्तामयमुत्ररोगम् ॥ १२ ॥
जन्माष्टमद्वादशराशियातौ
कष्टं विधत्तः[2] खलु राहुकेतू ।
स्यातां शुभौ भ्रातृषडाययातौ
क्षेत्रेषु शेषेषु हि मध्यमौ तौ ॥ १३ ॥
दिनकररुधिरौ प्रवेशकाले
गुरुभृगुजौ भवनस्य मध्ययातौ ।

---

१ धनमाल । २ दधाते ।

रविसुतशशिनौ गृहावसाने
शशितनयः फलदस्तु सर्वकालम् ॥ १४ ॥
यस्य गोचरफलं प्रमाणतस्तस्य वेधफलमिष्यते नवा ।
प्रायशो न बहुसम्मतं विदः स्थूलमार्गफलदो हि गोचरः॥१५॥
अष्टवर्गपरिशाधितो ग्रहः श्रेष्टतां समनुवर्त्तते यदा ।
रिष्फगोऽपि हितदःप्रशस्यते योऽष्टवर्गशुभदःसशोभनः॥१६॥
जन्मकाले ग्रहक्रान्तराशेरारभ्य कल्पयेत् ।
शुभस्थानेषु विन्दुश्च रेखास्तद्दितरेषु च ॥ १७ ॥
द्वयोरन्योन्यविश्लेषादुत्तमाधममध्यमान् ।
कल्पयेच्चारमार्गेण तत्तद्राशिषु खेचरान् ॥ १८ ॥
अर्कः स्वस्माच्च भौमाच्च मन्दाच्च विचरन् शुभः ।
प्रथमायसुहृन्मृत्यु–शैलाज्ञाधर्म्मवस्तुषु ॥ १९ ॥
शुक्रात्कामारिरिःफेषु जीवाद्धयायारिधर्म्मसु ।
चन्द्रात्त्र्याज्ञारिलाभेषु विचरन् शुभदो रविः ॥ २० ॥
बुधादाज्ञात्रिलाभारि व्ययधी धर्म्मगःशुभः ।
लग्नादाज्ञात्रिलाभारि सुहृद्रिःफेषु शोभनः ॥ २१ ॥
स्वस्मादुपचयेष्विन्दुरेकत्र मदनेऽपि च ।
लग्नादुपचयेष्वारात् सुतधीर्धर्म्मवस्तुषु ॥ २२ ॥
रवेरस्ते च मृसौ च तथैवोपचयेषु च ।
शनेस्व्ययारिपुत्रेषु विचरन् शोभनःशशी ॥ २३ ॥
बुधात्प्रथमादिक्शैलसुहृन्नाशायधीस्त्रिषु ।
जीवात्प्रथमकर्म्माद्रि धनलाभाष्टबन्धुषु ।
शुक्राद्धर्म्मसुहृत्पुत्रः सहजायादिकर्म्मसु ॥ २४ ॥
भौमः स्वस्मात्स्वबन्ध्वाज्ञानाशाय प्रथमादिषु ।

---

१ खेचरान् । २ तेसु । ३ कर्म्मद्रि ।

मातावुपचयेचार्कादिन्दोर्ल्लाभत्रिशतृषु ॥ २५ ॥
लग्नात्प्रथमपुत्राय सहजद्वेषिकर्म्मसु ॥
मन्दात्प्रथमधर्म्माय नाशबन्ध्वाद्रिकर्म्मसु ॥ २६ ॥
बुधाच्चायारिपुत्रेषु गुरोर्दिग्विद्ययामगः ।
शुक्रान्निभनलाभाच्च सपत्नेषु चरन् शुभः ॥ २७ ॥
बुधःस्वस्माद्व्ययायाज्ञा त्रिधीधर्म्माद्रिशतृषु ।
शुक्रात्त्रिधीसुहृद्धर्म्मनाशाय प्रथमेषु च ॥ २८ ॥
मन्दात्शतृव्ययाद्रिषु भौमान्मन्दवदिष्यते ।
लग्नाच्छतृस्वलाभाज्ञा प्रथभाष्टसुहृत्सु च ॥ २९ ॥
चन्द्राल्लग्नवदा[१]यूते जीवाद्रिष्फायमृत्युषु ।
षष्ठेपि च रवे[२]र्ध्यायधर्म्मशतृव्ययोपगः ॥ ३० ॥
जीवः स्वस्माद्विषत्पुत्रधर्म्मारिःफेतरः शुभः ।
भौमात्प्रथमनाशाद्रिष्वाज्ञालाभसुहृद्गतः ॥ ३१ ॥
सूर्य्याद्रिफारिवर्ज्जेषु लग्नात्सन्ताष्टमेतरः ।
भार्गवाच्छतृलाभाज्ञाधर्म्मपुत्रधनाश्रयः ॥ ३२ ॥
चन्द्राद्धयायास्तधर्म्मस्त्रेष्वार्केर्द्रिद्धीव्ययत्रिषु ।
बुधात्प्रथमधर्म्माय सुहृत्स्त्राज्ञासु[२]तारिषु ॥ ३३ ॥
शुक्रःस्वस्माद्व्ययद्वेषी कामवर्ज्जेषु शोभनः ।
लग्नात्षट दिक्स्मरान्स्यान्यस्तथाचन्द्राद्व्य[३]यं विना ॥३४॥
मन्दादिषुद्रिषट्सप्तव्ययवर्ज्जेषु शोभनः ।
सूर्य्यादष्टादिरिष्फेषु [४]ध्याज्ञायात्रिनवान्त्यगः ॥ ३५ ॥
बुधाद्धर्म्मारिधीलाभतृतीयेषु च शोभनः ।
भौमान्निनवषड् बन्धुर्लाभालाभेषु वृद्धिदः ॥ ३६ ॥

---

१ वदाद्योन । २ सूनारिसु । ३ व्ययांविना: । ४ दष्टय ।
५ ध्याज्ञायार्त्तीश्रणंतगुरोः ।

शनिः स्वस्माच्चिधीलाभसपत्नेषु प्रशस्यते ।
भौमाद्व्ययषुं[1]व्ययाज्ञासुचन्द्रादायत्रिशत्रुषु ॥ ३७ ॥
शुक्रादायारिरिष्फेषु गुरोर्ध्यायान्त्यशत्रुषु ।
सूर्य्यात् स्वनिधनायाज्ञा प्रथमाचलबन्धुषु ॥ ३८ ॥
लग्नादुबन्ध्वायदिक्शत्रुलाभधर्म्मेषु शोभनः ॥ ३९ ॥

मित्रक्षेत्रे स्वनियतगृहे स्वत्रिकोणे स्वतुङ्गे
स्थास्नुःखेटःप्रदिशति फलं पादवृद्ध्या क्रमेण ।
शत्रुक्षेत्रेप्व[2]णुतरफलं नीचगश्चार्कलुप्तः
किञ्चिन्नेष्टं फलति हिततो व्ययात्पापपाकः ॥४०॥

इति अष्टकवर्गादेशोनाम चतुर्द्दशोऽध्यायः ।

---

## पंचदशोऽध्यायः ।

—ooo—

इदानीं जन्मतत्कालमाश्रितैर्विहगादिभिः ।
प्रकल्पिताः योगगुणाः प्रकाश्यन्ते समासतः ॥ १ ॥
अर्केतरैः शिशिरगो रणफाव्ययस्थै
र्वस्तूपगैश्च सुनफा शुभसंस्थितैश्च ।
योगो भवेद्धुरुधुरा रहितग्रहाभ्यां
केमदूरुमः प्रकथितो निपुणैरुभाभ्याम् ॥ २ ॥
प्रभुःप्रख्यातकीर्त्तिश्च शीलवान् भव्यवेशवान् ।
विषयेनसुखी साधु रणफायामनामयः ॥ ३ ॥
स्वभुजाकर्म्मणैश्वर्य्यं पार्थिवोवापितत् समः ।
सुनफायांभवेत्ख्यातो यशसा च धिया धनैः ॥ ४ ॥

---

१ तेसुव्ययाज्ञायाश् । २ स्वनुतरफलम् ।

त्यागी भोगी सुखी श्रीमान् वाहनाढ्यश्च भृत्यवान् ।
भवेद्धुरुधुराजातो बह्वारम्भविषादवान् ॥ ५ ॥
केमद्रुमसमुद्भूतः प्रेष्यो[1] धनविवर्जितः ।
बलात्मा मलिनो नीचो दुःखितश्च निरुद्यमः ॥ ६ ॥
योगकर्त्तरि भूपुत्रे तस्करः[2] क्रोधिविह्वलः ।
बुधे धनाढ्यो मतिमान् सूक्ष्मदृष्टिःकलासु च ॥ ७ ॥
जीवे गुणगणाधारः पूज्यते च नरेश्वरैः ।
भार्गवे सुखितोभूयः समृद्धिः सर्व्वसम्पदः[3] ॥ ८ ॥
सौरौ तु पूज्यते श्रेष्ठो बहुभृत्यः समुद्यमः ।
मिश्रेषु मिश्रगुणवान् बलिनो वा गुणाधिकाः ॥ ९ ॥
सूर्य्याद्द्वितीयग्रहयुक्तमृक्षं वंशीतिविद्भः कथितं पुराणैः ।
वाशीततो द्वादशभन्तयोस्तु सौम्यग्रहश्चेच्छुभमस्ति जन्तोः१०
रवौ चन्द्रादिसंयुक्ते यन्त्रज्ञःपापलालसः ।
निपुणःक्रूरचेष्टश्च शत्रुवृत्तिश्च धातुवित् ॥ ११ ॥
चद्रे भौमाद्रिसंयुक्ते कूटवेदी प्रियंवदः ।
कुलाग्रो वस्तुलक्ष्मज्ञः पुनर्भूतनयःक्रमात् ॥ १२ ॥
भौमे सौम्यादिसंयुक्ते मल्लो रक्षाधिकारवान् ।
सक्तश्च परदारेषु क्रमेण व्यसनान्वितः ॥ १३ ॥
सौम्ये जीवादिसंयुक्ते जातो भवति गेयवित् ।
प्रशस्तवचनोपेतः क्रमेणैवेन्द्रजालवित् ॥ १४ ॥
जीवे शुक्रादिसंयुक्ते प्रशस्तगुणमण्डनः ।
अन्नकारो भवेत् कश्चिद् घटकारोऽपि सम्मतः ॥ १५ ॥
असितेन सितेयुक्ते क्षुद्रनेत्रोऽपिवा भवेत् ।
स्त्रीविकीर्णधनोवापि[4] त्रिभिश्चैवं फलोदयः ॥ १६ ॥

---

१ प्रेक्ष्य । २ तस्सर । ३ सर्व्वसम्पदा । ४ स्त्रिवितीर्ण ।

चतुरादिभिरेकस्थैः प्रव्रज्याबलिनोभवेत् ।
बलिभिर्बहुर्भिभव्यः प्रथमातु बलीयसः[1] ॥ १७ ॥
शोभनाश्चतुराद्यास्ते यदि स्युर्बलवर्ज्जिताः ।
परैर्वा वीक्षितास्तत्र केवलादीक्षणार्चिताः ॥ १८ ॥
वाणप्रस्थः कपालीच शाक्य आजीवको यतिः ।
चरकोचेलको भानुप्रभृतीनां व्रताश्रयः ॥ १९ ॥
तत्तद्दशायांप्रव्रज्या दशान्ते च ततश्च्युतिः ।
अनन्यदृष्टैराजितै र्यावज्जीवं व्रताश्रयः ॥ २० ॥
योगकर्ता ग्रहस्तत्र रविलुप्तकरो यदि ।
भक्तिभावाजीवेज्जन्तु र्दीक्षितो न भवेत्तदा ॥ २१ ॥
चन्द्रस्याधिष्ठितं क्षेत्रं वर्गाधीशैः सुहृत्तमैः ।
यदि वीक्षेत धनवांस्तदाजातो भविष्यति ॥ २२ ॥
मध्यास्तैर्धनवत्कल्पः शुभैरुक्तगुणान्वितः
अशुभैःकिञ्चिदूनःस्यादेवंफलविनिश्चयः ॥ २३ ॥
षट्सप्ताष्टमगैरिन्दोरधियोगः शुभग्रहैः ।
तस्मिन् दीर्घायुषःशत्रुजेत्रश्चसुसुखोत्तरः ॥ २४ ॥
शशाङ्को धनवान् लग्नादनीचो धनवान् भवेत् ।
शुभैरुपचयस्थानगतैर्बलसमन्वितैः ॥ २५ ॥

लग्नाच्छशाङ्कादथवा कलत्र-
पुत्रक्षयोःसत्पतियुक्तयोश्च ।
संदृष्टयोर्वापरमा विभूतिः
स्वस्थानमप्येवमुषन्ति[2] केचित् ॥ २६ ॥

पितृमातृद्विषन्मित्रभ्रातस्त्रीभृत्यकाहिताः ।
दशमस्थैर्धनप्राप्तिर्लग्नेन्दुभ्यांविनादिभिः ॥ २७ ॥

---

१ बलीसितु बलोशितु । २ मुसन्ति ।

उदयार्कशशाङ्कानां दशमाधिपनिश्रितः ।
योंशस्तदीशस्यैव धनप्राप्तिं विनिर्दिशेत् ॥ २८ ॥
स्वर्णोर्णात्तृणभैषजादिभि रिनेचन्द्रे कृषी स्त्रीजलै-
र्भौमे साहसशस्त्रधातुदहनैः सोम्ये कलाकौशलैः ।
जीवे विप्रबुधागमैर्भृगुसुते गोरत्नरौप्यादिभिः
सौरौ तु श्रमभारनीचकरणैरर्थोपलब्धिर्भवेत् ॥ २९ ॥
पुष्णन्ति भावान्मूर्त्तादीन् शुभास्तत्तत्समाश्रयाः ।
पापाभावेग्रहाःषष्ठे सौम्याः शत्रुनिवर्हिकाः ॥ ३० ॥
सर्व्वेऽपि द्वादशस्थाने व्ययवृद्धिं प्रकुर्व्वते ॥
अष्टमस्थाश्च कुर्व्वन्ति मृत्युवृद्धि विहङ्गमाः ॥ ३१ ॥
मातुःसुखादिसञ्चिन्त्यं रिष्फेनच धनेन च ।
इन्दुना च पितुश्चिन्त्यं पञ्चमेन च भानुना ॥ ३२ ॥

अजे कुलीरे वृषभे च लग्ने
चन्द्रे स्थिते रूपधनैरुपेतः ।
कृष्णे च शेषोदयगे शशाङ्के
जडो दरीद्रो विकलाङ्गदृष्टिः ॥ ३३ ॥

भानौ मेषोदयंप्राप्ते भवेत्तैमिरिको नरः ।
सिंहलग्नगते तस्मिन्निशान्धः परिकीर्त्तितः ॥ २४ ॥
अर्के कुलीरलग्नस्थे स्याच्च बुद्बुदलोचनः
अर्के शेषेषु लग्नेषु नष्टदृष्टिर्भवेन्नरः ॥ ३५ ॥
व्ययस्थानं गतश्चन्द्रो वामलोचननाशनः ।
द्वादशात्मा तु तत्रस्थो दक्षिणेक्षणनाशनः ॥ ३६ ॥
कुलतुल्यः कुलश्रेष्ठो वन्धुमान्यो धनान्वितः ।
भोगी नृपसमो राजा स्वर्क्षस्थैरेककादिभिः ॥ ३७ ॥

---

१ यांशस्तदीसवा स्यैवं । २ रन । ३ रिते । ४ बकरणैः । ५ भावद्रशष्टे । ६ निर्हिका ।

त्रिप्रभृतिभिरुच्चस्थै राजानो नृपवंशजाः ।
चतुरादिभिरन्येपि त्रिकोणोपगतैस्तथा ॥ ३८ ॥
एकादिभिररिक्षेत्रे गतैर्नीचगतैरपि ।
दारिद्रो दुःखितो मूर्खो व्याधितो वन्धनान्वितः ॥३९॥
अभितप्तो वधं प्राप्तः क्रमाज्जातो भवेन्नरः ।
एकोपि परमोच्चस्थः सुहृद्दृष्टो नृपत्वदः ॥ ४० ॥
त्र्यादिभिर्बलिभिःकेन्द्रे गते नृपसुतो नृपः ।
वर्गोत्तमस्थिते चन्द्रे चतुरादिभिरीक्षिते ॥ ४१ ॥
भवत्यन्योऽपि नृपतिः किमुत क्षत्रियोद्भवः ।
वर्गोत्तमांशे लग्नस्य चतुरादिभिरीक्षिते ॥ ४२ ॥
तदापि क्षत्रियो द्वाभ्यां योगाभ्यां नृपराट् भवेत् ।
ऋक्षसन्धिषु सञ्जातो न चिरञ्जीवति ध्रुवम् ॥ ४३ ॥
यदि जीवेत्तदा रुग्णो वाहनाद्यैः समृध्यति ।
वर्गोत्तमगताः क्रूराः शुभगाश्च गुणोतराः ॥ ४४ ॥
वर्गोत्तमं नरं कुर्य्युर्यवनेश्वरदर्शने ।

सर्व्वैश्चरादिनिलयैस्त्रय आश्रयोत्था
रज्जुःक्रमेण मुसलश्च नलस्तृतीयः ।
इर्ष्यान्वितः प्रचुरमानयुतो धनाढ्यः
सर्व्वेऽपि ते स्वकुलगोत्रजने प्रसिद्धाः ॥ ४५ ॥

त्रिकोणगैर्य्यमारार्कैः सर्प्पो दुःखितजन्मदः ।
[1]दलयोगस्तथा जीवसितज्ञैर्भोगिजन्मदः ॥ ४६ ॥
[2]अष्टादशाकृतिः प्राप्ता गदानन्तरकेन्द्रगैः ।
तत्र जातो भवेद्यज्वा धनवानर्थलालसः ॥ ४७ ॥
विलग्नास्तगतैःसर्व्वैः शकटो योग इष्यते ।

---

१ दलयोश्चातथा ॥ २ अष्टादसाकिति ॥

तत्रजःशकटाज्जीवी कुत्सितात्मजदारवान् ॥ ४८ ॥
विहङ्गःखचतुर्थस्थैस्तत्र दूतः कलिः प्रियः ।
लग्नपञ्चमधर्म्मस्थैः शृङ्गाटकमतः सुखी ॥ ४९ ॥
शृङ्गाटकविरोधेन हलस्तत्र कृशीबलः ।
सर्व्वकेन्द्रगतः सर्व्वैः पद्मस्तत्र धनी भवेत् ॥ ५० ॥
वापीकेन्द्रेतरस्थैश्च[1] सुखहीनो भवेन्नरः ।
विलग्नादिचतुःस्थैश्च यूपोऽस्मिन् दानतत्परः ॥ ५१ ॥
चतुर्थादिचतुःस्थैश्च चरस्तत्र च हिंस्रकः[2] ।
सप्तमादिचतुःस्थैश्च शक्तिस्तत्र धनी नरः ॥ ५२ ॥
दशमादिचतुःस्थैश्च दण्डस्तत्र प्रियोज्झितः ।
लग्नादिसप्तगैर्नौका तत्र कीर्त्तिः सुखोत्तरः ॥ ५३ ॥
मित्रादिसप्तगैःकूटस्तस्मिन्ननृतभाषणः ।
अस्तादिसप्तगैश्छत्रामित्रस्वजनवत्सलः ॥ ५४ ॥
कर्म्मादिसप्तगैश्चापस्तत्र मध्यसुखी पटुः ।
कण्टकेतरसप्तस्थै रर्द्धचन्द्रः सुरूपवान् ॥ ५५ ॥
लग्नादेकान्तरस्थैश्च चक्रं तत्र नृपाश्रितः ।
अर्थादेकान्तरस्थैश्च समुद्रस्तत्र भोगवान् ॥ ५६ ॥
एवमाकृतिजा योगाः सर्व्वे स्वार्ज्जितसम्पदः ।
यथा यथाग्रहैः सर्व्वैः सप्तस्थानसमाश्रयैः ॥ ५७ ॥
वीणायोगस्तत्रो जातः सङ्गीतकुशलः पटुः ।
क्रमादन्येपि षट्योगाः [3]वीणालक्षणवर्जिताः ॥ ५८ ॥
दामःपाशश्च केदारः शूलं युग्मश्च गोलकः ।
पापप्रियश्च दुश्शीलः कृषिकृद् घातकस्तथा ॥ ५९ ॥
दारिद्रो दुःखितश्चेति क्रमात्तेषु फलोदयः ।

---

१ प्रवीकेन्द्रेतुरस्थैश्च ॥ २ स्वरः ॥ ३ वीणालक्षण हानिनां ।

सङ्ख्यायोगा इमे सप्तनाभसास्त्रिंशदीपिता ॥ ६० ॥
एते सर्व्वदशास्वेव फलन्ति क्रमशोऽधमाः ।

कन्योदयस्थो रविरस्य पुत्रो
मीनस्थितश्चेत्प्रतिहन्ति भार्य्याम् ।
[1]हिनस्ति भौमः सुतमात्मजस्थः
सूर्य्यश्च धर्म्मस्थितवांश्च सत्यम् ॥ ६१ ॥

नित्यं मध्यगतिं प्रेयोश्चपलःसखलितो ब्रतः
अस्थिरश्रीः सुहृद्बन्धुश्चरक्षेत्रेषु जातवान् ॥ ६२ ॥
दीर्घसूत्रःक्षमायुक्तः सत्यवादी सुहृद्व स्थिरः ।
अविनष्टविभूतिश्च स्थिरक्षेत्रेषु जातवान् ॥ ६३ ॥
धीरोदारःकृतज्ञश्च सोद्यमो विविधक्रियः ।
दाता नष्टोदितश्रीश्च द्विस्वभावेषु जातवान् ॥ ६४ ॥
ग्राम्या रण्या[2]ब्जभोत्पन्ना स्तत्तच्छीला भवन्ति हि ।
चन्द्रराशिवशात ज्ञेयाः लग्नराशिवशादपि ॥ ६५ ॥
तस्करो बहुभोक्ताच पण्डितो वित्तवान् नृपः ।
क्लीवःशूरो दरीद्रश्च दुर्ज्जनःपापरोचकः ।
उग्रःश्रेष्ठश्च मेषादी नवलग्नांशकोद्भवः ॥ ६६ ॥

मन्त्रौषधेषु कुशलःशुभगः कलावान्
शूरो बधूविरहितः सुरतिप्रियश्च ।
ताम्राम्वकःसमराजिच्चतुरोऽटनेषु
निःसूनुरास्थिरधनः प्रथमर्क्षजातः ॥ ६७ ॥
सेवापटुःपरधनः प्रणयी सहिष्णु
द्वेषी विषादवहुलःसलिलप्रियश्च ।
स्त्रीनिर्ज्जितः सकलहःपिशिताशनश्च

१ हीनास्थ ॥ २ हो ॥

ह्रीवर्जितः सहजजिद्धरणीषु जातः ॥ ६८ ॥
कान्तःमयूरुवदनश्चपलःसमृद्धः
सीतालुराहवजयी दहनोग्रतेजाः ।
त्यागी वधूषु निरतो मतिविप्रयुक्तः
क्लेशासहःसकरुणो दहनाभिजातः ॥ ६९ ॥
क्लेशात्मवांश्च धृतिमान् मतिमान् ककुद्मान्
कन्याप्रजःप्रियवपुर्वृषखेलगामी ।
शूरो गुरुः[1]स्वशनको लघुशाकभोजी
स्त्रीवत्सलःप्रियवचाःपरमेष्टिजन्मा ॥ ७० ॥
भीरुः क्षमी मृदुतनुः सुभगः कृपावान्
मध्ये विभूतिबहुलो जठराग्निरुग्नः ।
प्राग्बन्धुमित्रविरही पिशुनःशिरालो
मूर्धावरोधविधुरो मृगशीर्षजातः ॥ ७१ ॥
पैशून्यशाठ्यवितथोक्तिपराभिचारः
[2]निस्नानधीः कुटिलपिङ्गलमूर्धजन्मा ।
हास्यप्रियःवरवधूनिरतः कलावा
न्त्युन्नतानतधनो गिरिशर्क्षजातः ॥ ७२ ॥
[3]सङ्गीतबद्धहृदयो हृदयङ्गमात्मा
द्यूतप्रियो मृदुवचाश्चिरकालभोजी ।
वार्द्धक्यसौख्यबहुलःपृथुतुङ्गधानः
पार्श्वोङ्कितः किल पुनर्वसुलब्धजन्मा ॥ ७३ ॥
शास्त्रार्थवित्पटुमतिः सुरतोपचारज्ञ
चातुर्य्यवान् परिषदीङ्गितविद्विवादी ।
मातुर्वियोगविधुरो जनकेनहीन

---

१ स्वशनतो । २ निष्नानधी । ३ नतानतधनो ।

श्राद्धोपचारनिरतः किल पुष्यजन्मी ॥ ७४ ॥
शीर्षोन्नतः प्रचुरभक्षणबद्धबुद्धि
द्वेषोल्वणः क्षपणकः प्रणयीन्द्रमायी ।
उच्चःशिरास्ततततनुर्विधुरः शयालु
र्मूर्खः परस्वसुखितो भुजगर्क्षजन्मा ॥ ७५ ॥

अल्पात्मजः पृथुतनुः समसंहतात्मा
शैलाटवी प्रणयवान् सुखितः सदैव ।
निसामयो युवतियोगविषण्णचेताः
सीमातिगो गुरुजनेषु मघाभिजातः ॥ ७६ ॥

क्रूरो विरूपतरमूर्तिरकार्य्यकोपी
युद्धप्रियःप्रियतमाभिरतःकृतघ्नः ।
बल्यःसुखीतनयवित्तविवर्जितश्च
विप्रप्रियः सुनिपुणश्च भगाभिजातः ॥ ७७ ॥

शास्त्रार्थवित्परवधूनिरतो दयावा
नल्पात्मजः कृशतनुः कृतयोगिसङ्ख्यः ।
सौम्यः परोपचरितो मधुराशनश्च
कान्तःसुनीतिनिधिरुत्तरफाल्गुणीजः ॥ ७८ ॥

लज्जान्वितःकुलिशधीर्बहुमाननीयः
कान्तःकृपालुरणघःकटुकाम्लभोजी ।
सत्वसङ्गवाननुपभोगविनष्टवित्तः
पान्थोलसः प्रमुदितश्च कराभिजातः ॥ ७९ ॥

कामी कठोरहृदयो बहुशिल्पवेदी
काव्यप्रियः सुललितश्च जघन्यबन्धुः ।
प्रांशुःप्रभूतविभवः समयेषु सक्तः
श्यामःप्रभुःकिल चतुर्दशभाभिजातः ॥ ८० ॥

देवद्विजन्मयतिपूजनलब्धकीर्तिः
स्त्रीनिर्जितः कफमरुत्प्रकृतिः कृतज्ञः ।
बन्धुःप्रियःसुनिपुणः क्रयविक्रयेषु
[1]रोगालयः समनिधिःखलु वायुजन्मा ॥ ८१ ॥
स्निग्धःसुहृत् सुपरुषो रिपुसुप्रसिद्धः
सन्त्यक्तपुत्रवनितः क्षितिपालपूज्यः ।
अत्यन्तरोगविधुरश्चपलार्थलुब्धः
कृत्यानुगःप्रणिधिरिन्द्रकृशानुजन्मा ॥ ८२ ॥
मित्रप्रियः परमसाधुरप्रौढनिद्रः
प्रच्छन्नपापहृदयः कृशदीर्घगात्रः ।
तीक्ष्णो विवृद्धवनिताप्रणयी नयज्ञः
सेवारतस्तनयवानपिमित्रजातः ॥ ८३ ॥
उग्रःप्रतापनिलयः परदूषणज्ञः
प्रज्ञान्वितःशठमतिर्नृपलब्धवित्तः ।
मिथ्याप्रलापनिपुणःकफवातमूर्त्तिः
पापक्रियासु चतुरःकिल शक्रजातः ॥ ८४ ॥
प्राज्ञःकविर्जनकलब्धधनःसदर्थः
कीर्त्तिप्रियः परिजनानुगतो वचस्वी ।
ह्रस्वः प्रसन्नयुतबन्धुरसत्यसन्धः
स्त्रीनिर्ज्जितःस्वकृपणः किल मूलजातः ॥ ८५ ॥
कर्म्मोद्यतः सलिलजातधनः सवीर्य्यः
त्यागी विशालदशनो गुरुविप्रयुक्तः ।
विद्याविवेकरहितः कलहप्रियश्च
नित्याधनः कुनखवान् सलिलाभिजातः ॥ ८६ ॥

---

१ रोगायसस्मयनिधिः ।

शीतालुराहवजयी बहुबन्धुमित्रो
धर्म्मध्वजो नृपगृहप्रभुरिङ्गितज्ञः ।
शूरो नितान्तकमनीयतनुः कृशाङ्गः
सम्पन्नभूतिरणघः किल विश्वजातः ॥ ८७ ॥

विद्वानगम्यवनितानिरतःप्रकाशो
ज्ञातेन्द्रजालचरितो भुजशक्तिशाली ।
शाठ्यःप्रयोगनिपुणः क्षितिपालमुख्यः
सौभाग्यभाग्यनिलयः श्रवणाभिजातः ॥ ८८ ॥

सत्याधिकःसलिलकेलिरतःकृतघ्नः
श्रीमान् निगूढ़चरितः परपीड़नेच्छुः ।
शौरःशिरालकरणः कविबन्धुलुब्धो
नीचाङ्गनासुनिरतो[2] वसुभप्रजातः ॥ ८९ ॥

क्रूरःपृथूरुचरणःकरभाभकण्ठः
पापप्रियश्च वटरःक्षयवृद्धियुक्तः ।
सत्यालयः सुबहुवृद्धवधूपतिश्च
सर्व्वोन्नतिः सुमतिमान्[3] शतभप्रजातः ॥ ९० ॥

क्षोणीजलब्धविभवः सुभगो यशस्वी
गूढक्रियःक्षणविहीनविवृद्धवित्तः ।
उद्दामवृत्तिरपटुः कविरिङ्गितज्ञः
सद्बन्धुमित्रपुरुषः परुषोजपादः ॥ ९१ ॥

सर्व्वप्रियःसमसुसंहृतगात्रसन्धिः
सन्धानसत्यवचनैः[4]सलिलोदितश्च ।
गोमानतीवकृपणः परदारशक्त
श्चाटुप्रचारकुशलो यमुपान्त्यजातः ॥ ९२ ॥

---

१ रपटु । २ च शुभ । ३ शतपाप्रजातः । ४ सलिलोदितस्व ः।

स्थूलः सपत्नविजितः पिशुनः कृतघ्नः
कामी पटुः सहजजन्तुषु पश्चिमश्च ।
धीमानतीवसुखितः समरप्रियश्च
शूरो महापरिजनः खलु पौष्णजातः ॥९३॥

एते सर्व्वे गुणाः पूर्णश्चन्द्रो यदि बलोत्तरः ।
नक्षत्रं वा बलाढ्यं स्याद्व्यूनःपुनरन्यथा ॥ ९४ ॥
नन्दादितिथिसञ्जातास्तत्तदाख्या गुणोत्तराः ।
पर्य्यायामासषट्प्रोक्तास्तत्राद्यन्तावशोभनौ ॥ ९५ ॥
प्रीतिः सौभाग्यमायुष्मान् शोभनो वृद्धिरेव च ।
हर्षणश्च शिवः सिद्धः शुभश्चेति नवोत्तमः ॥ ९६ ॥
ब्रह्मा वरीयान् विष्कम्भो वज्रं सिद्धिर्ध्रुवो धृतिः ।
साध्यः शुक्लइतिप्रोक्ता नवयोगास्तुमध्यमाः ॥ ९७ ॥
गण्डातिगण्डौशूलश्च सुकर्म्मा शक्रवैधृतिः ।
परिघश्च व्यतीपातो व्याघातश्च नवाधमाः ॥ ९८
मनस्विनो वरिष्ठेषु जाता मध्येषु मध्यमाः ।
अधमेषु च योगेषु क्रूरा विभववर्ज्जिताः ॥ ९९ ॥
जीवत्यसत्येन बवेप्रजातः परस्वचौर्य्ये न च बालवे तु ।
शास्त्रेणजीवत्यथकौलवे च शस्त्रोपजीवी किल तैतिले च ॥१००
मन्त्रौषधैःस्याद्गरजोपजातो बाणिज्यजीवी किल बाणिजे च
परोपघाते न च विष्टिजन्मा प्रेष्यत्वजीवी सकुनप्रजातः १०१
निधिश्चजीवो च चतुष्पदे स्याद्वैक्षेण जीवत्यपि नागजातः ।
किंस्तुघ्नजातो बहुशिल्पजीवोखेवंभवेयुःकरणस्वभावाः१०२
तत्तद्वारेषु सञ्जातः तत्तद्वारेश्वराकृतिः ।
गुणान् पञ्चाङ्गजानेवमादिशेद्दैवचिन्तकः ॥ १०३ ॥

---

१ भवेध्युःकरण स्वभावः ।

अश्विनीमृगशिरःपुनर्व्वसुपुष्यमित्रहरिमित्रवायवः ।
रेवतीतिनवतारकागणः कीर्त्यते त्रिदशसात्मनां गणः॥१०४॥
उत्तरत्रयमार्द्रश्च रोहिणी भरणी तथा ।
पूर्व्वत्रयमितिप्राज्ञै र्मानुषाणां गणःस्मृतः ॥ १०५ ॥
आश्लेषाग्नेयमूलेन्द्रधनिष्ठाशततारकाः ।
चित्रामघाविशाखाश्च राक्षसा नवतारकाः ॥ १०६ ॥
तुरङ्गश्चाश्वमातङ्गौ मेषीसर्पश्च[2]पन्नगी ।
स्वाविड़ालश्च वस्तश्च मार्ज्जारीमूषिकाखवः ॥ १०७ ॥
वृषभो महिषी व्याघ्री लूलायो व्याघ्रकामिनी ।
मृगी तुरङ्गी च शुनी कपिर्धेनुःल्यवङ्गमः ॥ १०८ ॥
नारी च शारमेयश्च नरश्च वृषभस्तथा ।
करिणीतिक्रमादेते अश्विभादेश्च योनयः ॥ १०९ ॥
गणान् योनिश्च वृक्षांश्च तत्तन्नक्षत्रजन्मिनाम् ।
भावसत्वं गुणं शौर्य्यश्चादिशेद्दैवचिन्तकः ॥ ११० ॥
पुञ्जातकफलं सर्व्वं तुल्यं स्त्रीजातके भवेत् ।
किन्त्वत्र चन्द्रलग्नश्च सप्तमश्च विचार्य्यते ॥ १११ ॥
लग्नत्वं चन्द्रयोगो वा युग्मराशिमुपागतः ।
सती रूपवती नारी गुणिनी ललितोत्तरा ॥ ११२ ॥
ओजराशौ नराकारा दुर्भगा कुलटा तथा ।
अबलस्थेन संदृष्टे भर्ता कापुरुषो भवेत् ॥ ११३ ॥
कुजेऽस्तगे शुभे दृष्टे शैशवे विधवा भवेत् ।
भास्करे धवसंत्यक्ता सौरे कन्येव जीर्य्यते ॥ ११४ ॥
क्रूरैःसप्तमराशिस्थैः विधवैव भवेद्ध्रुवम् ।
मिश्रेऽत्र सौम्यैःपापैश्च पुनर्भूरीति[3]निश्चिता ॥ ११५ ॥

---

१ मित्रा ।    २ पन्नसी । ३ निस्विता ।

यद्यन्न घटते स्त्रीषु शुभं वा यदि वा शुभम् ।
तत्तद्भर्त्तृ[1]युता सा हि चिन्तनीया[2] विपश्चिता ॥ ११६ ॥
हुतभुक् सलिलं शस्त्रं ज्वरश्चामय एव च ।
तर्षःक्षुच्चेति सूर्य्यादिग्रहणां मृत्युहेतवः ॥ ११७ ॥
निधनस्थेन मृत्युःस्यात्तदिदं पश्यता तथा ।
[3]लग्नादि तद्द्रेष्काणस्य योविशस्तद्ग्रहेन वा ॥ ११८ ॥
शीलाश्रयात्पथ्यनिसेवनाच्च मुन्याधिसा सर्व्वजनेषु मैत्र्याः ।
मृत्यूपगप्राणिविमोक्षणाच्च स्व[4]ल्पायुषो जीवितमेधते हि ११९

इति योगगुणादेशोनाम पञ्चदशोऽध्यायः ।

---

## षोड़शोऽध्यायः ।

पूर्व्वत्र जन्मनि कृतानि शुभाशुभानि
[5]जासाविभाव्ययसुभेदसमाश्रयानि ।
धन्यानराश्च धनिनश्च विभावयन्ति
वक्ष्यामि लक्षणविनिश्चयमल्पमस्मिन् ॥ १ ॥
ऊष्णीषमूष्णेतररश्मिखण्ड
सनानमाविष्कुरुते नरेन्द्रम् ।
बाले त्रिशूलाकृति रुज्ववलन्ती
श्रेष्टां जनानां जनयेत् समृद्धिम् ॥ २ ॥
केशाःप्रशस्ता स्फुटितेतराग्राः
स्निग्धाः सुनीलाः कुटिलावसनाः ।

---

१ भर्तृसुता । २ चिन्तनीयः । ३ लग्नादि हद्रकानस्य । ४ स्वल्पायुपं । ५ जाताविभावय ।

द्विधा विभिन्ना द्विपकुम्भतुल्यं
शिरोभवेदन्यबधूरतानाम् ॥ ३ ॥
शतायुषः पञ्च भवन्ति खण्डा
रेखाललाटेषु ततः क्रमेण ।
ऊनं पुनर्विंशतिवत्सराणां
प्रत्येकमायुर्मनुजेषु कुर्यात् ॥ ४ ॥
ऋज्वी भवेत् क्रूरतरात्मनो भ्रू-
ररोमशा लोभवतो नरस्य ।
ओष्ठौ तु मध्ये ऽपचितौ सुरक्तौ
सुखेन दन्तावरणौ प्रशस्तौ ॥ ५ ॥
दृष्टिस्तु पक्ष्मलपुटापरदारसक्ता
माकेकरापिशुनमक्षमर्मर्ज्जुनश्रीः ।
सङ्ग्रामशूरमरुणा सदयञ्च नीला
पिङ्गा तु दुष्टमनसः खलु बुद्बुदाभा ॥ ६ ॥
आपीनगण्डौ धनिनं दधाते
मिथ्यावचःसक्तमरोमसौ तौ ।
कण्ठोऽतिदीर्घः कृपणो धनाढ्यः
सुसङ्गतो ह्रस्वतरश्च निःस्वः ॥ ७ ॥
जिह्वा करोति विपुला सुधियं कृशा तु
मूर्खं दृढार्थपरधीः सुखितञ्च मृद्वी ।
नासाश्रियं वितनुते शुकतुण्डतुल्या
भूरिव्ययञ्च किपटा चिरजीवितञ्च ॥ ८ ॥
आखुश्रवा भवति वाङ्मयपारदृष्टो
दीर्घायुषो भवति रोमसकर्णपाली ।

---

१ निम्नम ॥ २ सुबणश्च ॥

ह्रस्वश्रवा धनयुतःकुटिलस्वश्रवाः स्यात्
स्थामोज्झितश्च मृदुलश्रवणो दरीद्रः ॥ ९ ॥
हस्तावकर्म्मकठिनौ वटरौ मृदूच
पादौ स्वरश्च बहुभाषणतोऽप्यभेदः ।
रोम्नां मृदुत्वमसकृद्वपनेपि शक्ति
रल्पाशिनःक्षितिपवल्लभतां विधत्ते ॥ १० ॥
कोशो दीर्घतरः करोति कृपणं ह्रस्वस्तु भूमीश्वरं
स्थूलः श्रीरहितं कृशस्तु सुभगं भोगान्वितो ग्रन्थिमान् ।
अग्रेवामनतः सुतार्थविलयं वक्रोऽन्यथा पुत्रिणां
मज्ञातुल्यफलम्प्रलम्बवृषणो दीर्घायुषं जन्मिनाम् ॥ ११ ॥
मूत्रस्य धारानतिविस्रगन्धा मदक्षिणा वृत्तगतिर्निवोष्णा ।
निःशब्दनिर्य्याणमुखायतश्रीः नरं विधत्ते बहुवित्तभार्य्यम् १२
रेतःकरोति मधुगन्धमनन्तभोगं मैरेयगन्धमतिधूर्त्तमृषीसविश्रम् ।
स्वेतं धनाढ्यमसितं कृपणं सुरक्तं द्वेशोल्वणञ्च सुभरं द्रुतमर्थवन्तम् १३
स्फीक् मण्डूकनिभाकरोति नृपतिं पीठोपमा निर्धनं
स्थूलं मध्यमराजिकं बहुभुजं निःस्वं कृशोसस्थिनी ।
ब्रह्मघ्नं विषमञ्च जानुयुगलं जङ्घाकुरङ्गोपमा
गोत्रश्रेष्ठतरं तदङ्गविहतिं नूनं पुनःसन्धयः ॥ १४ ॥
करचरणतलं मृत्पाण्डुरं स्वेदयुक्तं
विपुलमसितरेखं श्लेषदूराङ्गुलीकम् ।
सितकरनखराङ्कं भृत्यकुत्सं विधत्ते
निगदितविपरीतं भूरिभृत्यार्थभोगम् ॥ १५ ॥
एकत्र कूपे नृपमेकरोम द्वे श्रोत्रियं त्रीणिकला मवीणम् ।
चत्वारिनिःस्वं जनयन्तिखर्व्वःशठोऽतिमूर्खःकृशदीर्घदेहः १६
तर्ज्जन्यान्तगता करोत्यविहता रेखाशतं वत्सरान्
विंशत्यूनमतःक्रमेण कुरुते मयङ्गुली मान्तगा ।

श्रीरेखैसपरानतो नृपरतो वाण्या गुणोल्लासिनी
ता विश्लिष्टतरः परस्परमिहश्रेयः परं कुर्व्वते ॥ १७ ॥
आमध्यमुद्गतवतीमनिबन्धनस्तु
रेखा करे मतियुतं बलिनञ्च धत्ते ।
सामत्स्य पुच्छसदृशा यदि मूलतःस्या
दग्रेच कुन्तसदृशा कुरुते च भूपम् ॥ १८ ॥
सर्व्वाङ्गुली मूलभवोर्द्धरेखा पर्व्वण्यधस्तान्मुनिभिः प्रशस्ता ।
आरोग्यनामस्तुतिलाभपुत्रान् धत्तेकनिष्ठादिभवा क्रमेण ॥१९॥
यवाकृतिःपाणितलस्य मूले चाङ्गुष्ठपर्व्वस्वापि सुभस्ता ।
अपर्व्वपर्व्वण्यपि चाङ्गुलीनामग्रेषु वक्राकृतयश्च भद्राः ॥२०॥
अङ्गुष्ठमूले जनयन्ति पुत्रान् रेखा बृहत्यस्तनुकाश्च पुत्रीः ।
सहोदराः स्युःकरभस्य मूले तस्यैव चान्त्यं वनिता विकल्प्या२१
कनिष्ठिका कोटिरनामिकायाः तृतीयपर्व्वस्प रुपादतीता ।
धत्तेच भूपं तुलितास्ववर्गश्रेष्ठं तदूनासुतवित्तहीनम् ॥ २२ ॥
सर्व्वाङ्गुलीष्वग्रभवोर्द्धरेखा कुर्य्याद्धराधीश्वरवल्लभत्वम् ।
स्थूलास्तथाल्पा कृपणं हि रेखा वच्मसपीडां निपुणञ्च सूक्ष्मा २३
अम्भोजचक्रा कुसकुण्डलानां दम्भोलिशङ्खध्वजवारिजानाम् ।
चिह्नानि कुर्य्युःमनुजं नरेशं पादेपि चैवं विहितोर्ध्वरेखा ॥२४॥
त्रयो विसालाः गम्भीराः ह्रस्वाश्चत्वार ईप्सिताः ।
पञ्च दीर्घाश्च सूक्ष्माश्च षट् तुङ्गाः सप्त लोहिताः ॥ २५ ॥
धत्ते विशालां कटिमिष्टभार्य्या मुरोविशालं विजयाश्रियाङ्कम् ।
मूर्द्धा विशालो धनधान्यभाजं धीराविशालत्रयमेवमादुः ॥२६॥
स्वरो गभीरो मधुरान्नभाजं नाभी गभीरा पितृवित्तभाजम् ।
सत्वं गभीरं जयिनं विधत्ते धीरा गभीरत्रयमेव माहुः ॥ २७ ॥

---

१ नामस्तुटि । २ सूलशस्ता ।

ह्रस्वो गलो गुणधनं कुरुते च पृष्ठं
ह्रस्वं प्रशस्तशयनं मदनध्वजस्तु ।
ह्रस्वोनरेश्वरमितः प्रबलाच जङ्घा
ह्रस्वेति खर्व्वकचतुष्टयमेवमाहुः ॥ २८ ॥

सुदीर्घबाहुश्चिरकालजीवी सुदीर्घनेत्रः प्रचुरार्थलाभी ।
सुदीर्घनासास्थिरमित्रबन्धुर्ल्लोकप्रियो दीर्घहनुःप्रदिष्टः ॥२९॥
दीर्घाङ्गुलिकःपुरुषो बहुयोषित् समागमः ।
इत्येवं पञ्चदीर्घानि प्रशस्तानि विचक्षणैः ॥ ३० ॥
सूक्ष्मान्यङ्गुलिपर्व्वाणि स्थिरचित्तं प्रकुर्व्वते ।
सूक्ष्माःकेशाश्चरोमाणि जनयन्ति सुभोगिनम् ॥ ३१ ॥
सूक्ष्ममांसत्वचश्चापि दधते मृदु मानसम् ।
इत्येवं पञ्चसूक्ष्मानि निर्द्दिष्टानि पुरातनैः ॥ ३२ ॥
कक्षःकुक्षिश्च वक्षश्च नासा स्कन्धो ललाटिका ।
उन्नता वीर्य्यधान्यश्रीः सुहृच्छाक्तिसुखप्रदाः ॥ ३३ ॥
रक्तपाणिर्धनाढ्यःस्या द्रक्तपादश्च यानवान् ।
रक्तनेत्रःश्रिया युक्तो रक्ततालुःसुभोजनः ॥ ३४ ॥
बहुमित्रो रक्तनखो रक्तजिह्वश्च बुद्धिमान् ।
रक्ताधरो वचस्वी स्यादित्येवं रक्तसप्तकम् ॥ ३५ ॥

इति पुरुषलक्षणम् ।

ललाटे दृश्यते यस्याः तिलकं कृष्णपिङ्गलम् ।
वज्राकृतिर्य्याविमला सा स्यादैश्वर्य्यभाजनम् ॥ ३६ ॥
वामे पयोधरे यस्याः हस्ते कर्णे गलेऽपि वा ।
माषकस्तिलको वापि सापि लोकेन पूज्यते ॥ ३७ ॥

---

१ स्थिर मित्रं ।

यस्याः सकूपौ हसने कपोलौ
सश्मश्रुकं वा यदि चोत्तरोष्टम् ।
उत्पिण्डिका रोमवती च जङ्घा
सा दैवहीना कुलटापतिद्विट् ॥ ३८ ॥
यस्याःकटङ्कारवती गतिश्च
होत्रीव भूमिं पदयोर्निधाने ।
हस्ताश्च पादाश्च भवन्ति शुष्काः
सा स्यादधन्या विनयोज्झिता च ॥ ३९ ॥

अनामिका या पदयोः प्रयाणे स्पृशेन्नभूमिं युवती सभूतिं ।
निहत्य भर्तृद्वितयं क्रमेण तृतीयमासाद्य भवेत् स्थिरा सा ४०
अङ्गुष्टतो यच्चरणे सुदीर्घा प्रदेशिनी सा न पतिं रमेत ।
पार्श्वद्वये सुप्रकटा यदीये रोमावली सापि च भर्तृहीना॥४१॥
आवृत्तरोमाणि ककाटिकायाः पृष्टस्य सन्धौ प्रकटाणि यस्याः ।
सा भोगहोना पतिविप्रयुक्ताः नाभौ तटा चेन्मुनिभिःप्रशस्ता॥४२॥
काकस्वरा सापि च काकजङ्घा निस्निग्धकेशद्विजलोमयुक्ता ।
ह्रस्वाङ्गुलीश्छिद्रपुटाञ्जलीश्च भर्तुर्विधत्ते भवनं हि शून्यम् ४३
उच्छूनयोनिर्द्रविणेन हीना नीचा च शुष्कस्मरमान्दिरा च ।
अश्वत्थपर्णोपमयोनिविम्वा पीनोरुगण्डा च वधूःप्रशस्ता ॥४४॥
चुच्छुन्दरीगन्धनिधिस्तुयोनि र्नाभिः प्रशस्ता पट्ठभिःपुराणैः ।
आवृत्तकण्ठा चलशङ्खरेखा भवेद्विशेषेण पतीव्रता सा ॥ ४५ ॥

लक्षणान्यवशेषाणि पुंलक्षणवदादिशेत् ।
अस्मिन्नतिशया दोषाः प्रोक्ताःप्रह्लादनोदिताः ॥ ४६ ॥
विपच्यते च यस्याद्यौ सजङ्घं पदपृष्टकम् ।
द्वीतीये सक्थिजानूनि तृतीये कटिगुह्यजम् ॥ ४७ ॥

---

१ ह्रस्वाङ्गुलीश्छिद्रपुटाञ्जलीश्च ।

चतुर्थे सौदरौ हस्तौ सपृष्ठं हृदयं ततः ।
षष्ठे कण्ठःसकक्षास्यः सकपोलश्रुतिःपरम् ॥ ४८ ॥
अष्टमे घ्राणदन्तोष्ठाः नवमे भ्रूललाटिका: ।
दशमे तु शिरःतत्तदङ्गकेषु च लोमजम् ॥ ४९ ॥
पाणियुग्मे च या रेखा पदयुग्मे च कीर्त्तिता ।
यानि लक्ष्माणि दुष्टश्च तत्तत्फलति सर्वदा ॥ ५० ॥
भूवारिवह्निवायूनां छायापीतारुणासिता ।
पाण्डरश्चेति तत्रान्ते न शुभे तु शुभे परे ॥ ५१ ॥

इत्याङ्गलक्षणादेशोनाम षोडशोऽध्यायः ।

---

## सप्तदशोऽध्यायः ।

माषकस्तिलकःस्यन्दः प्लोष्यश्चकण्डुतीत्यथ ।
प्रकाश्यन्ते समासेन पञ्चोत्पाताःशरीरजाः ॥ १ ॥
गर्भोत्थितस्य तल्लक्ष्म प्रकृतं तदुदाहृतम् ।
प्रकृत्यन्यत्वमुत्पातः पञ्चैते प्रमुखास्ततः ॥ २ ॥
धनक्षयं वितनुते माषको दक्षिणे पदे ।
स्त्रीविप्रयोगं वामे तु जङ्घयोरर्थसम्पदौ ॥ ३ ॥
जान्वौ क्षेमारिवृद्धिश्च सक्थौ स्त्रीलाभविग्रहौ ।
वृषणे धनधान्ये च कोशे कोशजयोजयौ ॥ ४ ॥
वन्धुवित्तविलोपौ च द्वयोर्ज्जघनभागयौ ।
सव्योदरे रिपुत्रासः श्रेयो वामोदरे भवेत् ॥ ५ ॥
स्तनयोरर्थमित्राप्तिः पार्श्वयोःमरणामयौ ।
कक्षयोःशोकदैन्येव पृष्ठयोरश्रुपीडनम् ॥ ६ ॥

दक्षहस्तेऽर्थलोपश्च स्थानभ्रंशस्ततोऽन्यतः ।
प्रकोष्ठयोर्जयालाभौ शोकहर्षौ तदूर्ध्वयोः ॥ ७ ॥
अंशयोःकीर्त्तिलाभौ च कण्ठे विग्रहनिग्रहौ ।
ककाटिकायाश्चदक्षांशे शोको रोगो परांशके ॥ ८ ॥
चुबुके भीतिदारिद्रौ गण्डयोर्भोगदुर्य्यशः ।
अधरोष्ठे मनस्तापं प्रियं स्यादुत्तरोधरे ॥ ९ ॥
नासिकापुटयोर्ज्जातौ तापनिर्वेदकारिणौ ।
दृशोराधिसमाधी च कर्णयोःप्रियविप्रयौ ॥ १० ॥
भ्रुवोःस्त्रीकलहक्षेपौ शङ्ख्योर्विजयो द्वयोः ।
ललाटे व्याधिदारिद्रौ मूर्ध्नि श्रीविभवौ क्रमात् ॥ ११ ॥

इतिमाषकोत्यातादेशः ।

---

दक्षपादतले जातस्तिलकस्तनयापहः ।
वामे निहन्ति वनितां कुरुते च सुहृत्क्षयम् ॥ १२ ॥
असितो वा सितोवापि पीतो वा रक्त एव वा ।
पुष्परूपो नखेष्वङ्कः स उत्पात उदाहृतः ॥ १३ ॥
रक्तासितावधिफलौ[1] पीतश्वेता तु मध्यमौ ।
दक्षिणे चरणाङ्गुष्टे कलङ्को वित्तलोपकृत् ॥ १४ ॥
द्वितीये विग्रहं प्राहु स्तृतीयं मानसामयम् ॥
चतुर्थे प्रियमाचष्टे पञ्चमे पुत्रसम्पदम् ॥ १५ ॥
यथोक्तविपरीतेन वामपादे फलं वदेत् ।
पादयोर्विपरीतेन फलं करनखेषु[2] च ॥ १६ ॥
पीडां पितुश्च मातुश्च पादयोःपृष्टजां वदेत् ।
जङ्घयोर्व्यसनानन्दौ सक्थोरग्निभयं द्वयोः[3] ॥ १७ ॥

---

१ वधिफलौ । २ करणकेषु । ३ रग्निभयोद्वयो ।

गुह्ये राजभयं प्राहुर्ज्जघने स्थानविच्युतिम् ।
उदरे कीर्त्तिनिर्वेदो पार्श्वयोर्व्यसनामयौ ॥ १८ ॥
स्तनयोःप्रीतिशोकौ च वक्षसि प्रियसङ्गमः ।
कक्षयोरर्थलाभञ्च दासहानिञ्च निर्दिशेत् ॥ १९ ॥
पृष्ठयोश्चौरभीतिञ्च लाभःस्याद्वाहनस्य च ॥
हस्तयुग्मोदरे वस्तुहानिर्बन्धुसमागमः ॥ २० ॥
तयोरेव च पृष्ठे तु श्रियश्च विपदं वदेत् ।
मित्रलाभश्च पुत्राप्ति मुभयोर्हस्तदण्डयोः ॥ २१ ॥
कृकाटिकायां क्षेमं स्यात् कण्ठे यात्रा विधीयते ।
गण्डयोर्नष्टलाभश्च लब्धहानिश्च निश्चयात् ॥ २२ ॥
चुबुके बाष्पपर्य्यन्तं शोकमेवं विनिर्द्दिशेत् ।
नासिकायां वपुर्वाहु दृशोरप्रियदर्शनम् ॥ २३ ॥
कर्णयोःप्रीतिवाक्यञ्च बन्धुनाशञ्च निर्द्दिशेत् ।
ललाटे राजसम्मानमुत्तमाङ्गे धनागमम् ॥ २४ ॥
यावदुत्पातविलयस्तावदेव फलोदयः ।
दद्रूणिक्रिमिरेखायाः गोपमार्गोप्ययंः फलम् ॥ २५ ॥

## इति तिलकादेशः ॥



स्यन्दते दक्षिणाङ्गस्य फलं वक्ष्ये यथाक्रमम् ।
यथोक्तविपरीतेन वामाङ्गस्यन्दने फलम् ॥ २६ ॥
पृथिवीलाभमाचष्टे शिरसि स्यन्दने ध्रुवम् ।
ललाटे स्थानवृद्धिः स्या[2]श्चिलयां प्रियसमागमः ॥ २७ ॥
शङ्खे व्यवसनलाभश्च श्रवणे श्रवणप्रियम् ।
दृशान्ते वस्तुलाभः स्यादुन्मूले मानसी व्यथा ॥ २८ ॥

---

१ भीह । २ स्याच्चिल्यं ।

केचिद् व्याचक्षते दृष्टे रथःप्रियसमागमम् ।
नेत्रान्ते धनलाभश्च उन्मूले भृत्यसंशमम् ॥ २९ ॥
लोचनस्योपरिस्पन्दौ[1] मानसीञ्च रुजं जगुः ।
कपोले विप्रयोगश्च चिबुके मधुरासनम् ॥ ३० ॥
अधरोष्ठे रिपुध्वंसो मित्राप्तिश्चोत्तराधरे ।
नासिकायां सुगन्धाप्तिर्गले च विजयो भवेत् ॥ ३१ ॥
अंशे च भोगवृद्धिश्च बहाविष्टेन सङ्गमः ।
मणिबन्धे यशोलाभो[2] हस्ते द्रविणसम्भवः ॥ ३२ ॥
पृष्ठे पराजयो वक्षस्युदयो[3] चोदरेषु च ।
स्तने त्वपूर्व्वे स्त्रीलाभं पार्श्वप्रोतिरनुत्तरा ॥ ३३ ॥
जठरे शोकवृद्धिश्च नाभौ स्थानादिह च्युतिः ।
कट्यामाश्रितसम्मोदः कोशे कोशविवर्द्धनम् ॥ ३४ ॥
मुष्के तनयलाभश्च जघने वनितागमः ।
वस्तौ कुटुम्बवृद्धिश्च[4] दोषःस्यादुरुपृष्ठतः ॥ ३५ ॥
ऊरुपौरस्त्यभागे तु मित्रता सचिवैःसह ।
जानुन्यरातिसन्धानमथवा गमनं ध्रुवम् ॥ ३६ ॥
जङ्घायाःस्थानलब्धिश्च पादपृष्ठे तु विग्रहः ।
प्रयाणं भयसंयुक्तं स्यन्दने चरणोदरे ॥ ३७ ॥

इति स्पन्दनादेशः ॥



मूर्द्धा ललाटस्य तटीभुजौच[5] वक्षश्च हस्तांघ्रितलानि चैवम् ।
भ्रूभ्रूणमुख्यावयवानि वै ते प्लेषोल्वणाःखेदकरा नराणाम् ३८॥
दृशौ कपोलावधरौ गलश्च कुक्षिश्च कोशो जघनञ्च पायुः ।
एकादशैतेऽवयवाःजलाढ्याःप्लोषोत्तरास्तोषकरा नराणाम् ३९

१ मानसीञ्च । २ जयोलाभो । ३ स्युदयोदयेसु च । ४ द्रेलस्या ।
५ कटाभुजौच ।

पृष्ठे च पार्श्वावथ सक्थिनी च जङ्घे च मुष्के च ककाटिका च
अग्निप्रभूतावयवा दशैते प्लोषोत्तरास्तापकरा नराणाम् ॥४०॥
नासाश्रुतिर्नाभिसुमस्तकञ्च कक्षद्वयं विंशतिरङ्गुलीनाम् ।
वायुस्तरास्तु त्रिघनांशकास्ते प्लोषोत्तरा बन्धुसमागमाय॥४१॥
शेषाश्च सर्व्वे तनुसन्धयश्च विद्भिन्नतो भूतमयो प्रदिष्टः ।
प्लोषोत्तरास्ते जनयन्ति कोशं न भूजलं सोद्भवसन्धयस्तु॥४२॥

इति प्लोषादेशः ।

आनाभितस्तमःश्लिष्टमाकण्टाव् सत्वसंयुक्तम् ।
आमूर्द्धतो रजोयुक्तं देहस्त्रिगुणवानिति ॥ ४३ ॥
अकस्मादेव कण्डूतिरुत्पातः समुदाहृतः ।
रजस्सत्वतमःकण्डूः प्रीतिसौर्य्यक्षयप्रदः ॥ ४४ ॥
पुंमक्रमोऽयं निर्दिष्टः सःस्त्रियोविपरीततः ।
पञ्चोत्पाताःक्रमादेते विलोमेन बलोत्तराः ॥ ४५ ॥
त्रयोपि पश्चिमोत्पाताः पक्षेण फलपाचकाः ।
चिररात्रम्प्रवृत्तास्ते चिरेण फलदा मताः ॥ ४६ ॥

इति देहोत्पातादेशोनाम सप्तदशोऽध्यायः ।

## अष्टादशोऽध्यायः ।

अतःपरं समासेन स्वप्नादेशो निरूप्यते ।
प्रयतोल्यं सकृद्भुत्वा प्रविशेद्देवतालयम् ॥ १ ॥
देवस्य पुरतो मन्त्रं साक्षतैःसर्षपैर्ल्लिखेत् ।
पूर्णे कुम्भे सदग्धास्ते बालिना च समर्च्चयेत ॥ २ ॥

१ भूभूत सुम्कावयवा।निवैते ।

ॐत्रिजटालम्बोदरवामनं[1] कक्षकफाय हुं हुं फट् फट्[2] स्वाहा।
अष्टोत्तरशतं जप्त्वा पीत्वा प्रक्षाल्य चाननम्।
देवध्यानपरो मौनी दक्षिणेन शयीत च॥ ३ ॥
पूर्व्वजन्मश्रुताभ्यस्तं स्वप्नरूपगतिं स्मरैः।
तदणूक्तमिति व्यर्थं स्वप्नदृष्टं विनिर्दिशेत्॥ ४ ॥
एष्याज्जन्मानि भोक्तव्यं प्रायःप्रशस्तिमानसम्।
तदस्पृष्टमिति व्यर्थं स्वप्ने दृष्टं परित्यजेत्॥ ५ ॥
दुर्व्वलग्रहपाकश्च स्वप्ने द्रष्टो नु भुज्यते।
तच्च चिन्तामयं स्वप्नं सर्व्वदैव बुधस्त्यजेत्॥ ६ ॥
वृक्षाद्रिशृङ्गाद्यधिरोहणश्च वाताधिकःपश्यतिश्चेतयात्राम्।
पित्ताधिकःकाञ्चनरक्तमाल्यादिवाकरादिज्वलनां न पश्येत्॥७॥
श्लेष्माधिको रौप्यसितप्रसूणुसरित्सरोम्भोनिधिलङ्घनानि।
त्रिस्थूणमूर्त्तिस्तु यथोक्तरूपैः स्वप्ने विमिश्रान् रजनीषु पश्येत्॥८॥
बीभस्तसत्वाभिभवोभिचारात् द्विश्वादभुद्गुह्यकजं प्रदिष्टम्।
एतानि सर्व्वाणि हि वर्ज्जयित्वा स्वप्नं भवेदिष्टसुरप्रदिष्टम्॥ ९ ॥
प्रत्यक्षवद्भवति यत् स्फुरतीव चान्तस्स्वप्नस्य तस्य नियमासदत्फलाप्तिः
स्वप्नाःशुभाशुभवशेन फलप्रदाये संक्षेपमात्रमिहता ननु वर्णयिष्ये१०
स्वप्ने प्रज्वलितं भवेद्यादिगृहं स्वाङ्गं स्वकीयं तथा
सर्व्वं वा सह बन्धुभिश्च यदि वा राज्यं स[3] वै प्राप्नुयात्।
आश्लिष्यस्त्ववनीं समुद्रमथवा शङ्कं[4] ध्वजं पर्व्वतं
गौरीं वायुमतीं सुरदूममसौभर्ता भुवो जायते॥ ११ ॥
देहं निकृत्य शतशो विकिरन्ति यस्य यो वर्ध्यते[5] च निगडेन गले च पादे[6]
मूर्त्तिश्च यस्य भवतीह पुरीषलिप्ता संप्राप्नुयात् सुमहतीं पदवीं श्रियश्च

---

१ सदुर्ग्वैस्तं। २ ड्ढकफाफय ढठः। ३ संज्ञैःप्रान्तियात्।
४ शक्रस्वजम। ५ वर्द्धते। ६ निगलेनगॅलेच।

पृष्ठे च पार्श्वावथ सक्थिनी च जङ्घे च मुष्के च ऋकाटिका च ।
अग्निप्रभूतावयवा दशैते प्लोषोत्तरास्तापकरा नराणाम् ॥४०॥
नासाश्रुतिर्नाभिमुमस्तकञ्च कक्षद्वयं विंशतिरङ्गुलीनाम् ।
वायुस्तरास्तु त्रिघनांशकास्ते प्लोषोत्तरा बन्धुसमागमाय॥४१॥
शेषाश्च सर्व्वे तनुसन्धयश्च विद्धिन्नतो भूतमयो प्रदिष्टः ।
प्लोषोत्तरास्ते जनयन्ति कोशं न भूजलं सोद्भवसन्धयस्तु॥४२॥

इति प्लोषादेशः ।

आनाभितस्तमःश्लिष्टमाकण्टाव् सत्वसंयुक्तम् ।
आमूर्द्धतो रजोयुक्तं देहस्त्रिगुणवानिति ॥ ४३ ॥
अकस्मादेव कण्डूतिरुत्पातः समुदाहृतः ।
रजस्सत्वतमःकण्डूः प्रीतिसौर्य्यक्षयप्रदः ॥ ४४ ॥
पुंमक्रमोऽयं निर्दिष्टः सःस्त्रियोविपरीततः ।
पश्चोत्पाताःक्रमादेते विलोमेन बलोत्तराः ॥ ४५ ॥
त्रयोपि पाश्चिमोत्पाताः पक्षेण फलपाचकाः ।
चिररात्रम्प्रवृत्तास्ते चिरेण फलदा मताः ॥ ४६ ॥

इति देहोत्पातादेशोनाम सप्तदशोऽध्यायः ।

## अष्टादशोऽध्यायः ।

अतःपरं समासेन स्वप्नादेशो निरूप्यते ।
प्रयतोल्यं सकृद्भुत्वा प्रविशेद्देवतालयम् ॥ १ ॥
देवस्य पुरतो मन्त्रं साक्षतैःसर्षपैर्लिखेत् ।
पूर्णे कुम्भे सद्गधास्ते बलिना च समर्च्चयेत् ॥ २ ॥

१ भूभूत सुम्कावयवा।निवैते ।

ॐत्रिजटालम्बोदरवामनं[1] कक्षकफाय हुं हुं फट् फट्[2] स्वाहा।
अष्टोत्तरशतं जप्त्वा पीत्वा प्रक्षाल्य चाननम्।
देवध्यानपरो मौनी दक्षिणेन शयीत च॥ ३॥
पूर्व्वजन्मश्रुताभ्यस्तं स्वप्नरूपगतिं स्मरैः।
तदणूकमिति व्यर्थं स्वप्नदृष्टं विनिर्दिशेत्॥ ४॥
एष्याज्जन्मानि भोक्तव्यं प्रायःप्रशस्तिमानसम्।
तदस्पृष्टमिति व्यर्थं स्वप्ने दृष्टं परित्यजेत्॥ ५॥
दुर्व्वलग्रहपाकश्च स्वप्ने द्रष्टो नु भुज्यते।
तच्च चिन्तामयं स्वप्नं सर्व्वदैव बुधस्त्यजेत्॥ ६॥
वृक्षाद्रिशृङ्गाद्यधिरोहणञ्च वाताधिकःपश्यतिश्वेतयात्राम्।
पित्ताधिकःकाञ्चनरक्तमाल्यादिवाकरादिज्वलनां न पश्येत्॥७॥
श्लेष्माधिको रौप्यसितप्रषूणुसरित्सरोम्भोनिधिलङ्घनानि।
त्रिस्थूणमूर्त्तिस्तु यथोक्तरूपैः स्वप्ने विमिश्रान् रजनीषु पश्येत्॥८॥
बीभत्ससत्वाभिभवोभिचारात् द्विश्वादमुद्गुह्यकजं प्रदिष्टम्।
एतानि सर्व्वाणि हि वर्ज्जयित्वा स्वप्नं भवेदिष्टसुरप्रदिष्टम्॥ ९॥
प्रत्यक्षवद्भवति यत् स्फुरतीव चान्तस्स्वप्नस्य तस्य नियमात्सदत्फलाप्तिः
स्वप्नाःशुभाशुभवशेन फलप्रदाये संक्षेपमात्रमिहता ननु वर्णयिष्ये१०
स्वप्ने प्रज्वलितं भवेद्यदिगृहं स्वाङ्गं स्वकीयं तथा
सर्व्वं वा सह बन्धुभिश्च यदि वा राज्यं स[3] वै प्राप्नुयात्[4]।
आश्लिष्यस्त्ववनीं समुद्रमथवा शङ्खं ध्वजं पर्व्वतं
गौरीं वायुमतीं सुरदूरुमप्सौभर्ता भुवो जायते॥ ११॥
देहं निकृत्य शतशो विकिरन्ति यस्य यो वध्यते[5] च निगडेन[6] गले च पादे
मूर्त्तिश्च यस्य भवतीह पुरीषलिप्ता संप्राप्नुयात् सुमहतीं पदवीं श्रियञ्च

---

१ सतुर्व्वैस्तं। २ ड्ढकफाफय ढठः। ३ संजैःप्रान्तियात्।
४ शक्रस्वजम्। ५ वर्द्धते। ६ निगलेनगँलेच।

विभर्ति यस्योपरि वारणो वा सितातपत्रं नृपतिर्द्विजो वा ।
ददाति गौरी यदि पुण्डरीकं दासोऽपि सःस्यादिह सार्व्वभौमः १३
अर्केन्दुगोशृङ्गविनिर्गतेन स्नानाभिषेकौ सलिलेन पाणौ ।
स्वप्ने गवां वा मुखदोहनञ्च नृमूर्द्धन्मांसनिसेवनञ्च ॥ १४ ॥

अन्त्रैश्चोदरनिर्गतैर्गिरिगृहग्रामादिसंवेष्टणं
कन्थायां परिरम्भने च सहसा स्वाङ्गप्रवेशोऽथवा ।
भुक्तिर्वा स्वसनञ्च सिंहकरिणामारोहणं तेषु वा
ग्रासश्चोदधिकाश्वपीक्षितिभृतां राज्यश्रियःसिद्धये ॥१५॥

तृणतरुकुसुमाम्बुप्रोद्भवे वा स्वनाभौ
दिनकरशशितारा भक्षणस्पर्शने वा ।
विदलति निजशीर्षे सप्त पञ्च त्रिधा वा
क्षितिगिरिपरिवर्तोन्मूलने वापि राज्यम् ॥१६॥

जये रणे वा व्यवहारवादे पुरीपभुक्तिभुविर्यस्य वीक्ष्य ।
अगम्यनारीगमनञ्च मृत्युःस्वशोतिभूरिद्रविणागमाय ॥१७॥

सितसुरभिमनोज्ञालेपमाल्याम्बराणाम्
सुरगुरुनृपगौरी ब्राह्मणानाञ्च दीक्षा ।
मणिरजतसुवर्णाम्भोजपात्रेषु भुक्ति
र्यदि दधिपरमान्नेशोणिते मज्जनञ्च ॥ १८ ॥

सिततुरगफलध्वजातपत्रव्यजनसरोजमणिद्विपेन्द्रलाभाः ।
प्रभवजयवभुक्ष्वेतिशब्दाःपरिमितराज्यफलप्रदा भवन्ति१९
मुद्रादर्शदाञ्जनी द्विपश्चस्त्री सज्ञासिषु चाङ्गणासिरुक्ता ।
लब्धे सरकेऽथदर्पणे वाँ भृङ्गारादिषु चोद्भवःसुतस्य ॥२०॥

कैमिन्येधनलब्धिरम्बुतरणे शोकस्य नाशो भवे
द्दर्शारोदितशोचितादिषु तथा देहे विवृद्धिर्मता ।

---

१ वजोवा । २ यस्यादि । ३ दिराध्यम् । ४ सक्य
५ स्वसोनि । ६ मणिपेन्द्र । ७ प्रहारादिसु । ८ कैमिणादन ।

गोलिङ्गीद्विजदेवतापितृसुहृद्भूपाश्च ये सन्ति यत्
स्वप्ने तन्नियमाद्भवन्त्यवितथं प्रोक्तं शुभं वा शुभम् ॥२१॥
नाभेरन्यत्र गात्रे तृणतरुकुसुमे प्रोद्गते स्नेहपानं
क्रीडायानोपभोगःखरकरभकपिव्यालरौद्राश्च सत्वाः ।
कायस्यालेपनं वा कलुषजलमषिगोपयःस्नेहपङ्कैः
दृग्जिह्वादन्तबाहुप्रपतनमथवानर्थशोकप्रदानि ॥ २२ ॥
गीतक्रीडितभूषितप्रहसितप्रेङ्खोलितास्फोटना
न्यर्केन्दुद्विजतारकादिपतनं स्रोतस्यधोमज्जनम् ।
रज्जुच्छेदचिताप्रतापजननीगात्रप्रवेशादि वा
स्वप्ने कांशविचूर्णनश्च शिरसि क्लेशामयानर्थदम् ॥ २३ ॥
श्यश्रुकेशगखदंष्णकल्पना वानरो विकृतनार्य्युपासनम् ।
रक्तवस्त्रमनुजाङ्गमर्दनं रोगमृत्युभयशोकतापदम् ॥२४॥

स्थलमृगपशुकीटान्यूपचर्य्यण्डजानां
प्लवनमुदकरागौ स्याद्विवाहोत्सवा वा ।
सरसिजजतुमाण्डक्रीडणं नर्तनं वा
मलिनविवसनत्वं चाशुशोकप्रदानि ॥ २५ ॥

पुंद्रव्यनाशे सुहृद्विप्रयोगे [2]भेदास्त्वप्रस्सरोजापहारे ।
प्रासादवृक्षादिवेश्मावतारः स्वप्नेषु नष्टो द्विजैःसम्प्रदिष्टः २६
मित्रस्याप्तिःस्याद्धिकोषासिलाभेऽवश्यं राजा प्राप्नुयात्साशनासौ
सर्प्पे कर्ण नासिकां वा प्रविष्टे तच्छेदःस्याद्विष्टेनैवास्य बन्धः॥२७॥
सर्पैस्त्वाहिभिर्वादष्टस्य स्वप्ने स्याद्यदि शोणितम् ।
नरो वा यदि नारी वा पुत्रञ्चार्थमवाप्नुयात् ॥ २८ ॥
तरुणं जीर्णमात्मानं स्वप्नान्ते यस्तु पश्यति ।
वृद्धिं तस्य विजानीयादारोग्यं चिरजीविनम् ॥ २९ ॥

---

१ मुदकरांसो । २ भेदश्चपन्ता ॥

यस्य तस्य गृहं शुक्लैर्वृषभैः समलङ्कृतम् ।
नरो वा लभते नारीं नारी वा लभते पतिम् ॥ ३० ॥
काकं गृद्धं कपिं श्येनं गोधां वा सूकरं तथा ।
स्वप्नान्ते यदि यः पश्येद्व्यसनं तस्य निर्दिशेत् ॥ ३१ ॥
खर्व्वतोच्चतलारोहः प्रशस्तः स्वप्नवेदिभिः ।
अन्यत्र ल्यववाल्मीकमहिषोष्ट्रखरादितः ॥ ३२ ॥
यद्यत्श्वेतन्तु वर्णेन पूजितं सर्व्वमेव तत् ।
तक्रकर्पासभस्मास्थि भक्तं तत्र त्विवर्ज्जयेत् ॥ ३३ ॥
कृष्णवर्णन्तु यद्द्रव्यं गर्हितं सर्व्वमेव तत् ।
अन्यत्र पर्व्वतान्भूमेः करिणः सलिलालयात् ॥ ३४ ॥
रक्तवर्णन्तु यद्द्रव्यं तत्सर्व्वं नः प्रशस्यते ।
अन्यत्र शोणितान्मांसात् प्रवालात्पद्मचन्दनात् ॥ ३५ ॥

आद्ये वर्षाद्वत्सराद्वा द्वितीये
यामे पाको वर्षपादात्तृतीये
मासात्पाकः शर्व्वरी पश्चिमांशे
सद्यःपाको गोविसर्गेषु दृष्टः ॥ ३६ ॥
दृष्ट्वा स्वप्नं शोभनं नैव सुप्यात्
पश्चाद्दृष्टो यः स पापं विधत्ते ।
शस्तं ब्रूयाद्यज्ञसाधुद्विजेभ्यः
तेत्वाशीर्भिः पूजयेद्युक्तदुग्धैः ॥ ३७ ॥

भूयो वा स्वपनं न चास्य कथनं गङ्गाभिषेको जपः
शान्तिःस्वस्त्ययनं निसेवनविधिःप्रातर्गवाश्वत्थयोः ।
विप्राणाञ्च तिलान्नपानकुसुमैः पूजा यथाशक्तितः
पुण्यं दैवतकीर्तनञ्च कथितं दुःस्वप्नविध्वसनम् ॥ ३८ ॥

इतिस्वप्नादेशोनामाष्टादशोऽध्यायः ।

---

१ भूयोमास्वप्नान्तवास्य ।

# एकोनविंशोऽध्यायः ।

तिरश्चां चरितादेशं समासेनाथ वक्ष्यते ।
हस्त्यश्वकाकश्वानश्च पेडाः[1]प्राधन्यकल्पिताः ॥ १ ॥
वाल्मीकस्थानगुल्मक्षुपतरुमथनःस्वेच्छया भ्रष्टदृष्टि
र्यो यद्यत्रानुलोमं त्वरितपदगातिर्वक्त्रमुन्नम्यचोच्चैः ।
कक्ष्यासन्नाहकाले जनयति च महच्छीकरम्बृहतिर्भू
स्तत्कालं वा मदान्धोजयकृदपरदं वेष्टयन् दक्षिणाञ्च ॥२॥
स्खलितगतिरकस्मात् त्रस्तकर्णोऽतिदीनः
श्वशितमृदुसुदीर्घो न्यस्तहस्तःपृथिव्याम् ।
द्रुतमुकुलितदृष्टिः स्वप्नशीलो[2] विमोहः
भयकृदहितभक्षी नैकशोऽसृक्शकृच्च ॥ ३ ॥

इतिगजचारितादेशः ।

---

आरोहतिक्षितिपतौ विनयोपपन्नो
यान्नानुगोन्यतुरगः प्रतिहेषितश्च ।
वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं
योश्वःसभर्तुरचिरात्प्रविणोति लक्ष्मीम् ॥ ४ ॥
मुहुर्मुहुर्मूत्रशकृत्करोति न ताड्यमानोऽप्यनुलोमयायी ।
सकार्य्यभीतोऽश्रुविलोचनश्च शिवंन भर्त्तुस्तुरगो विधत्ते॥५॥
वामैश्चपादैरहितोडयन्तो महीमवासाय भवन्ति पत्युः ।
सन्ध्यां सुदीप्तामवलोकयन्तो हेषन्ति चेद्बन्धुपराजयाय॥६॥

---

१ पेण्डाः । २ मो ॥

अनीचहेषन्ति किरन्ति वालं निद्रारताश्च प्रवदन्ति यात्राम्।
रुदन्ति चेद्दीनतरा स्वराश्च पांशुग्रसन्तश्च भयप्रदिष्टाः ॥७॥

इत्यश्वचरितादेशः ।

———o———

वैशाखे निरुपहते वृक्षनीचः सुभिक्षशिवदायी ।
विषकण्ठकी तु शुष्के ससुभिक्षभयाय च तद्देशे ॥ ८ ॥
नीडप्रागुरुशाखायां समा भवेत्प्रथमवृष्टिरपरस्याम् ।
याम्योत्तरयोर्मध्ये प्रधानवृष्टिस्तरोरुपरि भवेत् ॥ ९ ॥
शिखिदिशिमण्डलवृष्टि नैर्ऋत्यां शारदस्य निष्पत्तिः ।
परिशेषयोः सुभिक्षं मूषिकसम्पत्तु वायव्ये ॥ १० ॥
शरदर्भगुल्मवल्लीधान्यप्रासादगेहनिम्नेषु ।
शून्यो भवति सदेश श्चौराणां वृष्टिरोगार्त्तः ॥ ११ ॥
द्वित्रिचतुःशाखत्वं सुभिक्षदं पञ्चभिर्नृपान्यत्वम् ।
अण्डावकिरणमेकाण्डता प्रसूतिश्च न शिवाय ॥ १२ ॥
चौरकवर्णैश्चौराश्चित्रैर्मृत्युः सितैश्च वह्निभयम् ।
विकलैर्दुर्भिक्षभयं काकानां निर्द्दिशेच्छिशुभिः ॥ १३ ॥
अनिमित्तसंहतैर्ग्राममध्यगैःक्षुद्भयं प्रवासीद्भिः
क्रोधश्चक्राकारै रभिघातोवर्गवर्गस्थैः ॥ १४ ॥
अभयाश्च तुण्डपक्षैश्चरणविघातैर्ज्जनानभिभवन्तः ।
कुर्व्वन्ति शत्रुवृद्धिं निशि विचरन्तो जनविनाशम् ॥ १५ ॥
सव्येन खे भ्रमद्भिः स्वभयं विपरीतमण्डलैः सार्द्धम् ।
अव्याकुलं भ्रमद्भिर्वातोद्भ्रामो भवति काकैः ॥ १६ ॥
ऊर्ध्वमुखाश्चलपक्षाः पथिभयदाःक्षुद्भयाय धान्यमुषः ।
सेनाङ्गस्था सुयोद्धाः परिमोषं चान्यभृतपक्षाः ॥ १७ ॥

---

१ सू न्यो ॥ २ शाखिवृद्धिम ॥

भस्मास्थिकेशपत्राणि [1]विन्यसन् पतिवधाय शय्यायाम् ।
मणिकुसुमाद्यवहनेन सुतस्य जन्माङ्गनायाश्च ॥ १८ ॥
पूर्णाननेऽर्थलाभः सिकताधान्यार्द्रमृत्कुसुमपूर्व्वैः ।
भयदो जनसंवासाद् यदि भाण्डान्यवनयेत् काकः ॥१९॥
वाहनशा[2]स्त्रोपानच्छत्रच्छायाङ्गकुट्टने मरणम् ।
तत्पूजायां पूजाविष्टा करणेऽन्नसम्प्राप्तिः ॥ २० ॥
तद्द्रव्यमुपनयेत् तस्य लब्धिरपहरतिचेत् प्रणाशःस्यात् ।
पीतद्रव्येकनकं वस्त्रं कार्पासिके सिते रूप्यम् ॥ २१ ॥
सक्षीराज्र्जुनवञ्जुलकूलद्वयपुलिनगारुमन्तश्च ।
[3]प्राट्टषि वृष्टिं दुर्दिनमनृतास्नाताश्च पांशुजलैः ॥ २२ ॥
दारुणनादस्तरुकोटरोपगो वायो र्महाभयदः ।
सलिलमवलोक्य विरुवन् [4]वृष्टिकरो वृष्टिरोधीर्वा ॥ २३ ॥
दीप्तोद्विग्नो विटपे विकुट्टयन्वह्निकृद्वितपक्षः ।
रक्तद्रव्यं दग्धं तृणकाष्टं वा गृहे विदधत् ॥ २४ ॥
ऐन्द्रीं दिशमवलोक्य सूर्य्याभिमुखो रुवन् गृहे गृहिणः ।
राजभयबन्धुकलहं करोति सद्यः पशुभयश्चैव ॥ २५ ॥
शान्तामैन्द्रीमवलोकयत् [5]रौतिच राजपुरुषमित्राप्तिः ।
भवति च सुवर्णलब्धिः शाल्यन्नगुडाशनाप्तिश्च ॥ २६ ॥
आग्नेय्यामनला जीविकयुवतिप्रवरधातुलाभश्च ।
याम्ये कुलत्थभोज्यं गान्धर्व्वैर्दाहयोगश्च ॥ २७ ॥
नैर्ऋत्यांदूतश्चोपकरणदधि[6]तैलपललभोज्याप्तिः ।
वारुण्यां [7]मां समुराधान्यादिसमुद्ररत्नाप्तिः ॥ २८ ॥
[8]वायव्ये शस्त्रायुधसरोजवल्लीफलाशनाप्तिश्च ।

---

१ विन्यस्यत्पतिवधाय । २ शास्त्रवृद्धिम् । ३ प्रवाशद्भिः ।
४ वृष्टिकरोब्दानुरावीवा । ५ रुयात् । ६ तैलभोज्याप्तिः ।
७ मारुत्यां । ८ सरोजवस्त्रवल्ली ।

सौम्यायां परमान्नाशनं तुरङ्गाम्बरप्राप्तिः ॥ २९ ॥
ऐशान्यां सम्प्राप्तिर्घृतपूर्णानां भवेदनडुहश्च ।
एवं फलं गृहपतेर्गृहपृष्ठसमाश्रिते भवति ॥ ३० ॥
गमने कर्णसमश्चेत् क्षेमायनकार्य्यसिद्धये भवति ।
अभिमुखमुपैति यातु विशन्विनिवर्तयेद्यात्राम् ॥ ३१ ॥
वामे वाशित्वादौ दक्षिणपार्श्वेऽनुवाशते यातुः ।
अर्थापहारकारी तद्विपरीतोऽर्थसिद्धिकरः ॥ ३२ ॥
यदि वाम एव वशन्मुहुर्मुहुर्यायिनोऽनुलोमगतिः ।
अर्थस्य भवतिसिद्धिः प्राच्यानां दक्षिणश्चैवम् ॥ ३३ ॥
वामःप्रतिलोमगतिर्वाशन् गमनस्यविघ्नकृद्भवति ।
तत्रस्थस्यैव फलं कथयति यद्वाञ्छितं गमने ॥३४॥
दक्षिणविरुतं कृत्वा वामे वाश्येद्यथेप्सितार्थाप्तिः ।
वाशन् पुरोद्भूतं याति वाग्रतोऽर्थागमोऽतिमहान् ॥ ३५ ॥
प्रतिवाश्य पृष्ठतो दक्षिणेन योयाद्द्रुतं क्षतजकर्त्ता ।
एकचरणोर्कमीक्षन् विरुवंश्च पुरो रुधिरहेतुः ॥ ३६ ॥
दृष्ट्वार्कमेकपादस्तुण्डेन लिखेद्यदा स्वापिच्छाङ्गम् ।
परतो जनस्य महतो वधमभिधत्ते तदा बलिभुक् ॥ ३७ ॥
सस्योपेते क्षेत्रे वाशति शान्तोऽतिसस्यभूलब्धिः ।
आकुलचेष्टो वाशन् सीमान्ते क्लेशकृद्यातुः ॥ ३८ ॥
सुस्निग्धपत्रपल्लवकुसुमफलानम्रसुरभिमधुरेषु ।
सक्षीराव्रणसुस्थितमनोज्ञवृक्षेषु चार्थकरः ॥ ३९ ॥
निष्पन्नसस्यशाद्वलभवनप्रासादहर्म्यहरितेषु ।
धान्योच्छ्रयप्रभूतिषु शस्तेषु रुवन्धनागमकृत ॥ ४० ॥

---

१ तुरङ्गाम्बरप्राप्तिश्च । २ ऐश्यान्यं । ३ घृतपूर्व्वान्यासालब्धिः रुदाति । ४ सिद्धिदो । ५ वासत् । ६ वास्ति । ७ सिद्धिप्रस्थानम् । ८ श्वापिच्छाङ्गम् । ९ वाशानि ।

गोपुच्छस्थे वल्मीकगेऽथवादर्शनं भुजङ्गस्य ।
सद्यो ज्वरो महिषगे वाशति[1] गुल्मे फलं स्वल्पम् ॥ ४१ ॥
कार्य्यस्य व्याघातस्तृणकूटवामगेऽम्बुसंस्थे[2] वा ।
शुष्केऽग्निप्लुष्टेऽशनिहते च काके वधो रुवति[3] ॥ ४२ ॥
कण्टकिमिश्रे सौम्ये सिद्धिःकार्य्यस्य भवति कलहश्च ।
कण्टकिनि भवति कलहो वल्लीपारिवेष्टिते वन्धः ॥ ४३ ॥
छिन्नाग्रेऽङ्गच्छेदः कलहःशुष्कद्रुमस्थिते ध्वाङ्क्षे ।
पुरतश्च पृष्ठतो वा गोमसंस्थे[4] धनप्राप्तिः ॥ ४४ ॥
मृतपुरुषाङ्गावयवस्थितो ऽग्रतो वाशको[5] ऽतिमृत्युकरः ।
भञ्जन्नस्थिच चञ्चा यदि वाश्यते[6] ऽस्थिभङ्गाय ॥ ४५ ॥
रज्ज्वस्थिकाष्ठकण्टकिनिःसाराशिरोरुहानने रुवति ।
भुजगगजदंष्ट्रितस्करशस्त्राग्निभयान्यनुक्रमशः ॥ ४६ ॥
सितकुसुमाशुचि मांसाननेऽर्थसिद्धिर्य्यथोप्सिता यातुः ।
धुन्वन् पक्षावृद्धीननेच विघ्नं मुहुः क्वणति ॥ ४७ ॥
यदि शृङ्खलां वरत्रां वल्लीं वा यदा वाश्यते[7] बन्धः ।
पाषाणस्थेच भयं क्लिष्टापूर्व्वाध्विकयुतिश्च ॥ ४८ ॥
अन्योन्यभक्षसंक्रामितानने तुष्टिरुत्तमा भवति ।
बिज्ञेयःस्त्रीभालो दम्पसोर्वाशतोर्युगपत[8] ॥ ४९ ॥
प्रमदाशिर उपगतपूर्णकुम्भसंस्थेनाङ्गनार्थसम्प्राप्तिः ।
घटकुट्टने सुतविपत् घटोपदहनेऽन्नसम्प्राप्तिः ॥ ५० ॥
स्कन्धावारादीनां निवेशसमये रुवंश्चलत्पक्षम् ।
सूचयतेऽन्यस्थानं निश्चलपक्षस्तु भयमात्रम् ॥ ५१ ॥
बन्धःसूकरसंस्थे पङ्काक्ते सूकरे द्विकेऽर्थाप्तिः ।

---

१ वाशति । २ वामगेम्बु । ३ रुवति । ४ तस्थ ।
५ ग्रतोवासको मृतुकरः । ६ वशति । ७ वसति । ८ वाशते ।

क्षेमं खरोष्ट्रसंस्थे केचित् प्राहुः वधन्तु खरे ॥ ५२ ॥
वाहनलाभश्च गते वाशसनुयायिनि क्षतजपातः ।
अन्येऽप्यनुव्रजन्तो यातारं काकवद्विहगाः ॥ ५३ ॥
का इति काकस्य रुतं स्वनिलयसंस्थस्य निष्फलं प्रोक्तम् ।
कव इति चात्मप्रीत्यै क इति रुते स्निग्धमित्राप्तिः ॥५४॥
करइति कलहं कुरुकुरु च हर्षमथकटकटेऽतिदधिभक्तम् ।
केके विरुतं कुकुवा धनलाभं यायिनःप्राह ॥ ५५ ॥

काकद्वयस्यापि समानमेतत्
फलं विशेषेण पदाधिकेन ।
प्रारम्भकाले गमने प्रवेशे
परीक्षणीयं विदुषा तदेतत् ॥ ४६ ॥

इति वायसचरितादेशः ।

---ooo---

सूर्य्योदयेऽर्काभिमुखो विरौति ग्रामस्य मध्ये यदि सारमेयः ।
एको यदा वा बहवःसमेताः शंसन्ति देशाधिपमन्यमाशु ॥५७॥
सूर्य्योन्मुखः श्वानलदिक्स्थितश्च चोरानलत्रासकरश्चिरेण ।
मध्याह्नकाले ऽनलमृत्युशंसी सशोणितःस्यात्कलहो ऽपराह्णे॥५८॥
भषन् दिनेशाभिमुखोऽस्तकाले कृषीबलानां भयमाशु धत्ते ।
प्रदोषकालेऽनिलदिङ्मुखस्तु धत्ते भयं मारुततस्करोत्थम् ॥५९॥
उदङ्मुखश्चापि निशार्द्धकाले हृदि व्यथां गोहरणञ्च शास्ति ।
निशावसाने शिवदिङ्मुखश्च कन्याभिदुष्टानलगर्भपातान् ॥६०॥
उच्चैःस्वराःस्यु स्तृणकूटसंस्थाःप्रासादवेश्मोपरिसंस्थिता वा ।
वर्षासु वृष्टिं कथयन्ति तीव्रामन्यत्र मृत्युं दहनं रुजंश्च ॥६१॥

---

१ प्रासादवेश्मोत्तमसंस्थितश्च ।

प्रावृट्काले ऽवग्रहेऽम्भो वगाह्यं प्रस्नावृत्तैरेवकैश्चाप्यभीक्ष्णम् ।
आधुन्वन्तो वा पिबन्तश्च तोयं वृष्टिं कुर्व्वन्त्यन्तरे द्वादशाहात् ६२
द्वारे शिरो न्यस्य बहिःशरीरं रोरूयते वा गृहिणीं विलोक्य ।
शोकप्रदःस्यादथमन्दिरान्तर्वाहिर्मुखःशंसति बन्धकीं ताम् ॥६३॥
कुड्यमुत्किरति वेश्मनो यदा क्षेत्रकाननभयं तदा भवेत् ।
गोष्ठमुत्किरति गोग्रहं बदेद्धान्यलब्धिमपि धान्यभूमिषु ॥ ६४ ॥
एकेनाक्ष्णा साश्रुणा दीनदृष्टिर्मन्दाहारो दुःखकृत्तद्गृहस्य ।
गोभिःसार्द्धं क्रीडमाणःसुभिक्षं क्षेमारोग्यं चाभिधत्ते मुदञ्च॥६५॥
वामं जिघ्रेज्जानुवित्तागमाय स्त्रीभिःसाकं विग्रहो दक्षिणं चेत् ।
ऊरुं वामं चेन्द्रियार्थोपभोगाः दक्षं जिघ्रेदिष्टमित्रैर्विरोधः ॥६६॥
यातुः पादौजिघ्रेश्त चेदयात्रां प्राहार्थाप्तिं वाञ्छितां निश्चलस्य ।
स्थानस्थस्योपानहौ चोद्विजिघ्रेत् क्षिप्रं यात्रां सारमेयःकरोति॥६७॥
उभयोरपि घ्राणने हि बाह्वो विज्ञेयो रिपुचौरसम्प्रयोगः ।
अथ भस्मनि गोपयेत भक्षान् मांसांस्थीनि च शीघ्रमग्निकोपः॥६८॥
ग्रामे भषित्वापि बहिःश्मशाने भषन्ति चेदुत्तमपुंविनाशः ।
यियासतश्चाभिमुखो विरौति यदा तदा श्वा निरुणद्धि यात्राम् ६९
उकारवर्णेन रुतेऽर्थसिद्धिं रोकारवर्णेन च वामपार्श्वे ।
व्याक्षेपमौकाररुतेन विद्यान्निषेधकृत् सर्व्वरुतैश्च पश्चात् ॥७०॥
षड्खेति वोच्चैश्चमुहुर्मुहुर्ये रुवन्ति दण्डैरिव ताड्यमानाः ।
श्वानोऽभिधावन्ति च मण्डलेन ते शून्यतां मृत्युभयञ्च कुर्य्युः॥७१॥
प्रकाश्य दन्तान्यदि लेढि सृक्किणी तदाशनं मृष्टमुशन्ति तद्विदः ।
यदाननञ्चावलिहेन्न[3] सृक्किणी प्रवृत्तभोज्येऽपि तदान्नविघ्नकृत्॥७२॥
ग्रामस्य मध्ये यदि वा पुरस्य भषन्ति[4] संहत्य मुहुर्मुहुर्ये ।
ते क्लेशमाख्यन्ति तदीश्वरस्य श्वारण्यसंस्थो मृगवाद्विचिन्त्यः॥७३॥

---

१ सर्व्वं । २ ञ्च । ३ संगत्य । ४ पातो ।

